Acc No 647

श्रीः

# ।। आनन्दनन्दिनी ।।

# ANANDANANDINI

(संस्कृतमातृस्तुतिकाव्यम्)

*(A Sanskrit Poem of Eulogy to the Mother)*

(स्वीयसंस्कृतनन्दिनीतात्त्विकव्याख्यासहिता)

*With own Nandini (Critical Commentary) in Sanskrit*

रचयिता

डा. मूलम्पल्लि चन्द्रशेखरशर्मा

*Dr. Mulampalli Chandra Sekhara Sarma*

संस्कर्ता

विद्वान् मूलम्पल्लि नागमल्लशर्मा

*Vidvan Mulampalli Nagamalla Sarma*

आङ्ग्ल (नन्दिनी) तात्त्विकव्याख्याता

**English Nandini (Critical Commentary)**

**By**

डा. मुञ्जुलूरि नरसिंहाराव्

*Dr. Munjuluri Narasimha Rao*

---

***This book is published with the financial assistance of Tirumala Tirupati Devasthanams under the scheme 'Aid to publish relegious books'***

आनन्दनन्दिनीं ( संस्कृतामातृस्तुतिकाव्यम्)
संस्कृताङ्ग्लनन्दिनी (व्याख्या) सहिता ।
रचयिता -डा. मुलम्पल्लि चन्द्रशेखरशर्मा
आंग्लनन्दिनी व्याख्याता -
डा. मुञ्जलूरि नरसिंहराव्

प्रथममुद्रणम् - जनवरि १९९९
प्रतयः- ७५०
सर्वस्वाम्यं मूलग्रन्थकर्तुरेव
मूल्यम्- रु. १५०/-

891.21
CHA

मुखचित्रालङ्करणम्-
"पारमाणविकपञ्चाक्षरीयन्त्रम्"-
डा. अयाचितं नटेश्वरशर्मा

प्राप्तिस्थानम् -
डा. मूलम्पल्लि चन्दरशेखरशर्मा
१६५ SRT सैदाबाद कालनी
हैदराबाद आं. प्र. ५०००५९
फोन : 214133

मुद्रणम् -
आर् के. आफसेट प्रिण्टर्स
प्रभुत्वोन्नतपाठशालासमीपे
११-२-११२४, नाम्पल्ली,
हैदराबाद - 1
फोन : २१ ४१ ३३

टैप् सेट्टिंग् -
श्रीमती के . कामेश्वरी
अर्. के. ग्राफिक्स्
११-६-४१८. नाम्पल्ली, हैदराबाद
आं. प्र.
फोन- २१ ४१३३

**Anandanandini**
( A Poem of Eulogy to the Mother in Sanskrit).
WithNandinis ( Critical Comentaries) in Sanskrit & English)
Author- Dr. M. Chandra Sekhara Sarma
English Critical Commentary by
Dr. Munjuluri Narasimha Rao

First Edition : January 1999
Copies 750
All Rights Reserved with the Poet

**Price Rs. 150/-**

Front page Illustration
Dr. Ayachitam Nateswara Sarma

For Copies :
Dr. M. Chandra Sekhara Sarma
H. No 165/ SRT, Saidabad Colony
Hyderabad 500 059
Ph. No 4532432

Printed at :
R.K. Off-Set printers
Near Govt. High School
11-2-1124, Nampally
Hyderabd-1

Type Setting:
Smt. K. Kameswari
R.K. Graphics,
11-6-418, Nampally,
Hyderabad.
**Ph** : 21 41 33

श्रीः

# दिव्यश्रीवेङ्कटैश्वर्यम्

श्री वेङ्कटेशमीशानं हृल्लक्ष्मीवासभासुरम् ।
सुधीश्रीवैभवप्राप्त्यै भावयामि निरन्तरम् ।।
ऐश्वर्यं विश्वस्य स्वैश्वर्यं विश्वमूलतत्त्वस्य ।
स्वात्मैश्वर्यं जन्तोः नौमि श्रीवेङ्कटेश्वरैश्वर्यम् ।।

(ग्रन्थकर्तुरेव वेङ्कटेश्वरस्तुतेः ऐश्वर्यात्)

श्रीः

# पार्वतीपारमैश्वर्यम्

## (अर्धनारीश्वरमूर्तिः)

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

परस्परतपस्संपत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥

ॐशिवाभ्यां नमः

ग्रन्थकर्तुः जननीजनकौ

ब्रह्मश्री मूलम्पल्लि शिवलिङ्गय्यशास्त्री धर्मपत्नी श्रीमती विशालाक्षी देवी

कनिष्टपुत्रः चि. चन्द्रशेखरशर्मा

वन्देऽहं सच्चिदानन्दमनोवाग्देहयोगिनौ ।
पितरौ मे विशालाक्षी–शिवलिङ्गार्यदम्पती ।।
यत्प्रेयःश्रेयसोर्योगे संजातोऽन्तिमपुत्रकः ।
सतामाराधनायाऽयं विनम्रश्चन्द्रशेखरः ।।
मातापित्रोर्जगत्पित्रोश्चरणाम्बुजयोरिमाम् ।
आनन्दनन्दिनीं मुक्त्यै स्तुतिमर्पयति स्वयम् ।।

श्रीः

शिवतरुः

ब्रह्मश्री मूलम्पल्लि शिवलिङ्गय्यशस्त्री

धर्मपत्नी श्रीमती विशालाक्षीदेवी

१. पुत्रः

ब्रह्मश्री मूलम्पल्लि राजमल्लय्य

१. स्नुषा

धर्मपत्नी श्रीमती कमलाम्बा

(द्वितीय-तृतीयपत्न्योः जानकी-भवान्योः चित्रे अलभ्ये)

२. पुत्रः स्नुषा च

ब्रह्मश्री मूलम्पल्लि नागमल्लशर्मा
धर्मपत्नी श्रीमती ललिताम्बा

३. पुत्रः स्नुषा च

ब्रह्मश्री मूलम्पल्लि चन्द्रशेखरशर्मा
धर्मपत्नी श्रीमती प्रमीला

ॐ

नमः शिवाभ्याम्

आनन्दनन्दिन्याः आङ्गलनन्दिनी व्याख्याकर्तुः जननी-जनकौ

ब्रह्मश्री मुञ्जुलूरि अप्पाजीराव् धर्मपत्नी श्रीमती सूर्यप्रभावती

मुञ्जुलूर्यन्वये प्राज्ञविज्ञतत्त्वज्ञसारसे । सूर्यप्रभावत्यप्पाजीरायदम्पतिपुत्रकः।।
नरसिंहरायनामाऽहं भक्तितत्परया धिया । आनन्दनन्दिनींव्याख्यामाङ्गलवाणीस्वरूपिणीम्।।
नन्दिनीं नन्दनः स्वीयामर्पये पितृपादयोः । स्वात्मज्ञानावबोधाय सर्वैश्वर्यसुखाय च ।।

**English Critical Commentary is dedicated to my Parents**

**२. पुत्रः स्नुषा च**

ब्रह्मश्री मुञ्जुलूरि नरसिंहराव्, धर्मपत्नी श्रीमती सरोजिनी

श्री गणेशाय नमः

श्री शिवाभ्यां नमः

विद्वान्

**मूलम्पल्लि नागमल्लशर्मा**

विश्रान्तप्राचीनसंस्कृतान्ध्रपण्डितः

प्रभुत्वविद्याशाखा, आन्ध्रप्रदेशः ।

गृह.सं.133/SRTMP

सैदाबाद् कालनी,

हैदराबाद् ५०००५९

दि 4-11-1998

# सौदर्यम्

स्वस्ति । अस्मन्मातापित्रोः श्रीमद्विशालक्षी-शिवलिङ्गार्ययोः द्वितीयपुत्रस्य नागमल्लशमणः पितृप्रणतिपूर्विकेयं प्रणुतिः शुभाशंसनं च ।

१. पितरौ मे विशालाक्षीशिवलिङ्गार्यदम्पती ।
अवधारयतं स्वीयामेतां विज्ञप्तिमादरात् ॥

२. मातः! प्रकाशयाम्यद्य मदीयानन्दचन्द्रिकाम् ।
यत्कनिष्ठः सोदरोऽयं वत्सलश्चन्द्रशेखरः ॥

३. व्यरीरचद्बहून् श्लोकान् शताधिकगुणाधिकान् ।
आनन्दानन्दिनी नाम्ना त्वन्नुतिं व्याख्यया सह ॥

४. ये तु सौन्दर्यलहरीश्लोकतुल्याः सदाशयाः ।
कृत्याऽनया ऋणान्मुक्तः पितॄणां सुकृती खलु ॥

५. भारतं विश्वविज्ञानकोश इत्याख्यया युताम् ।
कृतिं दत्त्वाऽऽवयोरग्रजन्मनोश्चानृणोऽभवत् ॥

६. यथा विमुक्तो भ्राता मे पितॄणाच्चन्द्रशेखरः ।
तथा मोचय मां चापि त्वदृणान्मातरंजसा ॥

७. नाऽहं तथाविधोऽभूवमशक्तः कृतिकर्मणि ।
तस्माद्विज्ञापयाम्यद्य भवद्वात्सल्यबोधितः ॥

८. सर्वासामपि मातॄणां सामान्यः क्लेशसम्भवः ।
जनने सन्ततेः सम्यक् पालने लालनेऽपि च ॥

तथापि

९. मोटार् वाहनघातेन भग्नपादो यदाऽभवम् ।
रक्तक्षीणादिरोगैश्च यदा संपीडितो भृशम् ॥

१०. भूतावेशप्रयोगाद्यैः सङ्कटैश्च यदावृतः ।
शारीरिकैर्मानसिकैरार्थिकैश्चाऽपि सर्वदा ॥

११. चिकित्सालयसंवेशैः प्रभुत्वाधीनकर्मभिः ।
सिद्धरामादितीर्थेषु दैवीसेवाविधानतः ॥

१२. एवमादिभिरन्यैश्च क्लेशैश्चारुन्तुदैर्भृशम् ।
सम्पीडितौ यथा मत्तः भवन्तौ नेतरैस्तथा ॥

१३. तदात्मा दूयते शश्वत् भवत्सेवाविहीनतः ।
तस्मात्तव ऋणन्मोक्तुं नाऽहं शक्तोऽस्मि सर्वधा ॥

१४. कृत्यानया मम भ्रात्रा ये ये भावाः प्रदर्शिताः ।
मदीयास्तेऽपि ते सन्तु सौदर्यस्य प्रभावतः ॥

१५. तदेकतां सामागम्य भावैः भ्रातृविचिन्तितैः ।
नौमि सद्भक्तिसंपूर्णः सर्वान्तर्हृदयेन वाम् ॥

१६. सद्यस्तव ऋणान्मुक्तिं वाञ्छेऽहं पितरौ ! मम ।
तदङ्गीकुरुतं मेऽद्य प्रार्थनां पुत्रकस्य वाम् ॥

१७. संस्कृते चाङ्ग्लसाहित्ये तत्त्वभौतिकशास्त्रयोः ।
विद्वद्भिः श्रीमुञ्जुलूरि नरसिंहमहोदयैः ॥

२८ प्रियमित्रैश्च संबद्धैः सदाचारपरायणैः ।
कृतया ह्याङ्ग्लनन्दिन्या तात्त्विकव्याख्यया युता ॥

१९. "आनन्दनन्दिनी" ह्येषा बोभूयाद्विश्वसम्मता ।
सदाशिवप्रिया नित्यमानन्दस्यापि नन्दिनी ॥

२०. शिवयोस्तुतिरेषापि शिवयोगेन रञ्जिता ।
भूयात्प्रत्यक्षरं नित्यं सदाशिवसुदर्शिनी ॥

२१. अनेन स्तुतिपाठेन सर्वे सन्तु निरामयाः ।
सर्वान् कामान् समाप्याऽन्ते सदाशिवसमायुताः ॥

स्वस्तिश्रीबहुधान्य कार्तीकपूर्णिमा बुधवासरः

4–11–1998

एवम्

**मूलम्पल्लि नागमल्लशर्मा**

ॐ

ब्रह्मविद्यारत्नाकरः
तर्कव्याकरणसाहित्यशास्त्रालङ्कारः
**ब्रह्मश्री. सूरि रामकोटिशास्त्री**
विश्रान्तप्रधानाचार्यः
के एल् एन् संस्कृतकलाशाला,
तेनालिनगरम्, गुण्टूरु जिल्ला, आं. प्र.

1-10-J, अशोकनगर्,
हैदराबाद्. 500020
दि. 4-11-1998.

शिवाभ्यां नमः

# शुभाशिषः

स्वस्ति । श्री मूलम्पल्लि चन्द्रशेखरशर्मणे दीर्घायुष्मते शिवाराधकपूज्यश्री विशालाक्षी–शिवलिङ्गार्यतनूजाय संस्कृतान्ध्रकवितासाहितीसरस्वतीसमाराधकाय विद्वन्मणये "आनन्दनन्दिनी" स्तुतिग्रन्थप्रकाशनशुभसमये इतोधिकाभ्युदयावाप्तये वात्सल्यपूर्णानि महदाशीर्वचनानि वितीर्यन्ते ।

मङ्गलं दिशतु ते गणाधिपः मङ्गलं दिशतु ते सरस्वती ।
मङ्गलं दिशतु ते महेश्वरी मङ्गलं दिशतु ते महेश्वरः ॥

'विद्याप्रवीण' M.A., Ph.D. प्रभृति बिरुदाञ्चितेन परिशोधनव्यासादिभिः बहुग्रन्थैश्च संस्कृतान्ध्रभाषायोषालङ्करणविशेषकमातन्वता चिरंजीविना वर्धिष्णुना श्री चन्द्रशेखरशर्मणा सभक्तिश्रद्धं विरचितायामस्यां कृतौ निबद्धाः केचन विशेषाः समुल्लिख्यन्ते सहृदयमनःप्रीतये ।

" मातृदेवो भव" "पितृदेवो भव" इति श्रुत्यनुसारेण अयं स्वमातापितरौ समाराधयन् जगतः पित्रोः श्रीपार्वतीपरमेश्वरयोरैक्यानुसंधानेन परमं सामरस्यमातनुते; विशेषतश्च भक्त्या पूज्यश्रीमातुः वात्सल्यातिशयमभिवर्णयन् मातुः ऋणविमुक्तिः दुस्तरेति सूचयति ।

परा–पश्यन्ती –मध्यमा–वैखरी रूपेण विराजमानायाः वाग्देव्याः समुपासकोऽयं औमं महः प्रकाशताम् इत्यभ्यर्थयते । उमा ब्रह्मविद्यास्वरूपिणी हैमवती, तस्याः तेजः प्रसरतु । अथवा ओं (ॐ)= ईश्वरः शिवः तस्य तेजः प्रकाशः अभिव्यज्यतामिति शिवयोः सायुज्यमभिकाङ्क्षति ।

अपि च योगशास्त्रमर्यादामनुसृत्य मातापित्रोः इडापिङ्गलानाडीरूपेण सतोः प्रकाशमानयोः सदपत्यस्य सुषुम्नानाडीरूपत्वं तत्सञ्चारेण सहस्रारचन्द्रमण्डल स्रवदमृतधारास्वादश्च सम्यगभिवर्णितः ।

"आचार्यदेवो भव" इति श्रुत्यनुसारेण गुरुभक्तिश्च अभ्युदयनिश्श्रेयसावहा अत्र विशेषतः प्रदर्शिता ।

एवं सुगुणसम्पन्नाय शिवाराधकाय श्री मूलम्पल्लि चन्द्रशेखरशर्मणे परमेश्वरः वेदोक्तं परिपूर्णमायुष्यं आरोग्यं ऐश्वर्यसुखशान्तीश्च अनुगृह्णातु इति आशास्महे।

स्वस्ति श्री वहुधान्य संवत्सर
कार्तीक पूर्णिमा बुधवासरः
4-11-1998

**सूरि रामकोटिशास्त्री**

श्रीः

"Mahamahopadhyaya"
"Vedanta Siromani" "Vedanta Visarada", "Vidvan"
**DR. P. SRIRAMACHANDRUDU**
M.A, Ph.D(Skt), M.A. (English), M.A(Hindi)
Recipient of President's Certificate of Honour
Professor of Sanskrit. O.U. (Rtd.)

"NANDANAM"
7-1-32/4, P-2, Leelanagar
Begumpet,
Hyderabad-500 016
Ph. No. 2731200

# आनन्दबिन्दुः

मातुः गर्भे प्रवेशात् प्रभृति शिशोः पोषणे, संरक्षणे संवर्धने च कियान् वा क्लेशः अनुभूयते मातरपितृभ्यामिति भावनागम्यः अनुभववेद्यश्चायं विषयः सर्वेषां जनानाम् । अत एवाह तत्रभवान् मनुः–

"यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।

न तस्य निष्कृतिः [illegible]र्या कर्तुं वर्षशतैरपि ॥" (मनुस्मृतिः 2.227) इति ।

पित्रोरपि मातैव शतगुण[illegible] गौरवेणातिरच्यिते इत्युक्तं तेनैव –

"सहस्रं च पितॄन् माता गौरवेणातिरिच्यते ।" इति

तादृशीं मातृदेवाताम् अतिमहता भक्तिभावेन स्तुवता डा. श्री मूलंपल्लि चन्द्रशेखरशर्ममहाभागेन विरचितानां पञ्चविंशत्युत्तरशतसंख्याकानां श्लोकरत्नानां संग्रहरूपेयं कृतिः "आनन्दनन्दिनी" सार्थकाभिधाना । अत्रायं कविः मातरं न केवलं स्वमातरं परं तु जगन्मात्रभिन्नां भावयति पितरं च जगज्जनकम् । युक्तमेव किलेदं यतः तेषां तेषां तत्तत्कारणतया आपाततो भानेऽपि पार्यान्तिकं जगज्जन्मादिकारणत्वं जगत्पित्रोः पार्वतीपरमेश्वरयोरेव । अत एव वदति फलश्रुतौ कविः –

"नुतिं ह्येतां पूर्णां पठति मधुरं गायति च यः

श्रृणोत्येवं तत्त्वं परिसमधिगत्यार्द्रहृदयः ।

तदेकैक्यं सौम्यं निजमनसि संभावयति च

जगन्माता माता स्वरसमिह तस्मै प्रदिशति ॥" इति

प्रायः अद्यत्वे सर्वेऽपि मन्यन्ते–छन्दोबद्धा सर्वापि रचना काव्यमेवेति । वस्तुतः "रीतिरात्मा काव्यस्य" इति वामनोक्तिं स्मरन्तः न केऽपि सहृदयाः तथाङ्गीकुर्युः । व्याकरणसंस्कृतया शुद्धया भाषया संदृब्धा अपि केषांचित् कविंमन्यानां श्लोकाः शर्कराखण्डोपस्तृते पथि गच्छन् अनडुच्छकट इव कर्णारुन्तुदाः प्रसरन्ति पठनसमये । द्वित्रश्लोकपठनसमनन्तरमेव विश्रान्तिमीहते पठितुर्मानसम् । कटुरटतां शब्दानां श्रवणेनैव लब्धवैमुख्यस्य मनसः का कथा अर्थपर्यन्तानुधावने । श्रीमतः चन्द्रशेखरशर्मणः कवितेयं 'श्लेष' गुणेन समंचिता मधुरातिमधुरा पठितॄणां हृदयमुल्लासयति । "मसृणत्वं श्लेषः" (काव्यालंकार सूत्रम् 3.3.11) इति सूत्रितः,

''मसृणत्वं नाम यस्मिन् सति बहून्यपि पदानि एकपदवद्भासन्ते '' इति च कृतविवृतिः श्लेषः सर्वेष्वपि श्लोकेषु उपलक्ष्यते । पश्यतैकं श्लोकम् ।

''पितृभ्यामस्माकं सदमलचिदानन्दमहसः
प्रकाशाभ्यां पारस्परिकतपसोरद्वयतनुम् ।
गताभ्यां स्वालोकैर्विगलिततमस्कं जगदिदं
प्रकुर्वद्भ्यां नित्यं प्रभवतु शिवाभ्यां नतिरियम् ॥

श्लोकस्यास्य पठनसमनन्तरमेव शिवानन्दलहरीगतः 'कलाभ्याम् ' इत्यादि श्लोकः पठितॄणां मानसपथमवतरति ।

स्तोत्रेऽस्मिन् बहवः श्लोकाः अतिगभीरैः भावैः दार्शनिकसिद्धान्तैश्च ओतप्रोताः दृश्यन्ते। परन्तु अर्थस्य झटिति स्फूर्तिः यैव प्रसाद इति भण्यते, न कुत्रापि कुण्ठीभवति । दार्शनिकानंशान् अधिगन्तुं, शैवसंप्रदायसंबद्धांश्च कांश्चित् तत्र तत्रानायासं गुम्फितनि रहस्यानि प्रत्यभिज्ञातुं, कथं वेयं जननीस्तुतिः जगन्मातापित्रोः स्तुतिः संभाव्यते इति ज्ञातुं च न शक्नुयात् कोऽपि पठिता विना कांचिट्टीकाम् । अतः कविरेवास्य काव्यस्य नातिविपुलां, विषयप्रतिपादनैकप्रवणां व्याख्यां विरच्य पठितॄणां न केवलं काव्यरसास्वादे, नैकदार्शनिकविषयावगतौ च महान्तमुपकारम् अकुर्वन् ।

शिवज्योतिःश्रीभिः शिरसि करयोरूरुतलयोः
शिवां रात्रिं यावत् परशिवगणार्चाविधिरहो ।
सुसंपन्नः पित्रे जननि शिवयोगैकसुमनस्
सपर्यामोदश्रीललितकलनं तं नु कलये ॥

अस्मिन् श्लोके सूचितः गणार्चाविधिः विना व्याख्यां शैवसंप्रदायानभिज्ञैः न कैरपि ज्ञातुं शक्येत ।

एवं विना व्याख्यां कोवा शक्नुयात् –

''इडामालम्ब्याम्ब प्रकटय सुधासारसरणिं
तथा पैङ्गल्याप्त्या कलय महसां राशिमनघाम् ।
सुषुम्नामुद्योत्य स्वयमखिलचिन्मूर्तिमहितां
कलालोलां नस्त्वां विलसितकुलस्वां तनु सदा'' ॥

निक्षिप्तान् तान्त्रिकसिद्धान्तान् ज्ञातुम् ?

श्लोकेऽस्मिन् स्तोत्रमिदं स्वमातुः तेजोमयीं मूर्तिं सर्वेषामपि मनःफलके निवेशयितुं प्रभवेदिति सोरःस्पर्शं कथयति कविः –

गास्यामि तेऽम्ब ! निगमागमसंस्तुतार्यं
व्यासीभवंश्चरितमार्द्रहृदम्बुजातः ।

व्यालेखितास्मि जनहृत्फलकेऽपि च त्वां
तेजोमयीं कवितया करुणा भवेत्ते ॥

श्लोकेऽस्मिन् कविना आत्मनः संगीतशास्त्रज्ञानं सूचितं विवृतं च तद्व्याख्यायाम् –

शिशुत्वं मे सप्तस्वरमधुरसांगत्यकलना
कलापूरैर्गीतैः श्रुतिलयमनोमोहनरसम् ।
चिरं वीणेवाङ्के सुमृदुनि सुधासारहृदये
कराभ्यां ते मातर्ललितमिह संलापितमभूत् ॥

अवस्थाभेदेन वाचः परा – पश्यन्ती – मध्यमा –वैखरी – इति चातुर्विध्यं वर्णयन्ति वैयाकरणाः मन्त्रशास्त्रविदश्च ।

"वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ।
द्योतितार्था च पश्यन्ती परा वागनपायिनी ॥

इति सुप्रसिद्धोऽयं श्लोकः विद्वद्गोष्ठ्याम् । परा च वाक् चिदभिन्नैव । श्लोकेऽस्मिन् कविः चतुर्विधां वाचं निर्दिश्य तत्स्वरूपं सुनिपुणं व्यवृणोत् व्याख्यायाम् –

परा वाङ्मे मातस्त्वयि सकलतात्पर्यपरमा
परां पश्यन्तीं त्वां रविशतसहस्रद्युतिमयीम् ।
तथा मध्याऽऽधात्री त्वदनुपमचिन्मूतिरसधेः
स्वतस्ते वैखर्या स्फुटयतु सदौमं मह इह ॥

'कावेरी' नाम्न्याः गोः पयः दुग्ध्वा आत्मानं पाययन्तीं मातरं स्मरन्नयं कविः स्वबाल्यचेष्टावर्णनामुखेन यशोदा –श्रीकृष्णयोः वृत्तं स्मारयति अस्मिन् श्लोके –

दुहन्त्यां 'कावेरीं' सुरभिमिव गां त्वय्युषसि, त-
त्पयोधारानादश्रुतिमनु समागत्य तरसा ।
मया नग्नस्निग्धप्रियललितगात्रेण शिशुना
समापीतं दुग्धं जननि ! तव पृष्ठे च लुठितम् ॥"

"सर्वाङ्गस्पर्शसंफुल्लसर्वेन्द्रियसमुत्करम् ।
उभयानन्दकन्दं हि मधुरं शैशवं महत् ॥ "

इति श्लोके परस्पराश्लेषेण शिशुजननीभ्यामनुभूयमानमानन्दम् अनिर्वचनीयम् अतीव सुकुमारया रीत्या वर्णयति कविः ।

सार्धवर्षात् पूर्वं काव्यमिदं विस्तृतया आन्ध्रभाषाव्याख्यया साकं प्राचीकटत् कविः । अद्य च संस्कृतव्याख्यानसहितमिदं प्रकाश्यते । अस्मिंश्च पुस्तके डा. मुञ्जुलूरि नरसिंहरावमहोदयेन निर्मिता प्रतिपदार्थतात्पर्यरूपिणी आङ्गलभाषाव्याख्यापि संयोजितेति महत्या इय मुपकृतये भवेत् आङ्गलभाषाविदुषामिति विश्वसिमः । भौतिक शास्त्रे (Physics) निष्णातानां नरसिंहरावमहोदयानाम् इयं संस्कृतभाषापाण्डिती नितरां श्लाघनीया ।

अद्यत्वेऽपि बहवो दृश्यन्ते संस्कृतकवयः । प्रायः अन्यानुकरणप्रवणानामनेकेषां कृतयः संस्कृतभाषासंबद्धेन वैशिष्ट्येन विहीनाः दृश्यन्ते । तेषां पठने आधुनिकी काचन देशभाषा कविता पठ्यते इति जायते मतिः । एतादृशेऽस्मिन् काले अमरवाणीं नैक भावरत्नखचितसुवर्णालंकारेण अलंकुर्वाणाः श्री चन्द्रशेखरशर्माणः नितरामभिनन्दनीयाः । रसनिर्भरं नैकशास्त्रीयविषयसंन्दृब्धं चेदं काव्यरत्नं सहृदयेष्वानन्दज्योतिराविष्करिष्यतीति बाढं विश्वसिमि।

हैदराबाद
स्वस्ति श्री बहुधान्य
पुष्यपूर्णिमा शुक्रवासरः
1 .1 . 1999

**पुल्लेल श्रीरामचन्द्रः**

**Dr. Munjuluri Narasimha Rao**
Reader in Physics,
Viveka Vardhini College, Hyderabad.

5-33/1, Maruti Nagar
Near Kothapet,
Hyderabad - 60.

# Foreword

"Human relationships are given to you , not to be idolized, but idealized. If you always think of your mother as the unconditional love of the Divine Mother manifested in human form, you will be comforted when she is gone. The mother who has passed on is not lost to you; she is representative of the Divine Mother, who came to mother you for a short time and then was taken away, to remain concealed behind the Omnipresent love of the Divine Mother"

(Paramahamsa Yogananda in "Man's Eternal Quest" -p 371)

"Anandanandini" is a panegyric of the Divine Mother incognito. The poet, Dr Mulampalli Chandrasekhara Sarma, through his hundred and odd poems, is reminiscing about his human mother as a representative of the Universal Mother, thus perpetuating his (the prototype human) mother's presence for ages to come.

In the Bharateeya tradition, every conjugal union is as inseparable as the union of the word and its meaning. Viewed in this way, every conjugal union is an imperfect expression , if not perfect, of the greater Umamaheswara, half-man-half-woman Divine concept. Conjugality is thus a practical yoga, a short-cut, if followed properly, to realise the ecstatic state of Existence-Consciousness-Bliss (sat-chit-ananda). The offspring born of the Divine Conjugal union is the Universe. Therefore, it follows, as the night the day, that this offspring called the Universe is also an expression of that Ever New Joy.

Our Scriptures describe God as Triune :ॐ तत् सत्. सत् is the Father-aspect; it is the wisdom aspect of God. तत् is the Mother-aspect; it is like the Mother-Bird (Nature) brooding over its potential eggs. ॐ is the Child-aspect ; it is the Universal Set of vibrations (from the subtlest to the hugest) materializing as the cosmic creation. The "Child" is the emblem or principle through

which the Father and Mother aspects of God express their divine love. The cosmos is a child of that cosmic love. In Bhagavadgita, Bhagavan Sri Krishna spells this out in clear words :

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ (14–3)

"As above, so below". In the human family, we have the Triune Family in miniature. Through the long poem "Anandanandini", the poet is making an effort to bring out this truth in his own version.

It is humanly difficult to outline the glory of the Divine Mother. The poet's plight in writing this poetic panegyric on Mother is similar to that of the renowned Mooka Kavi. In his पादारविन्दशतकम् , Mooka Kavi writes thus:

"महिम्नः पन्थानं मदनपरिपन्थिप्रणयिनि !
प्रभुर्निर्णेतुं ते भवति यतमानोऽपि कतमः ।
तथाऽपि श्रीकाञ्चीविहृतरसिके कोऽपि मनसो
विपाकस्त्वत्पादस्तुतिविधिषु जल्पाकयति माम् ॥"

Only someone out of many millions and trillions
Trekking hard
Buckling at each step
May, to some extent, My Divine Mother !
Track the course of thy Divine Glory -
Though it is so
Yet I know not what is spurring me
What mental mellowness of mine is urging me
To babble songs
In praise of Thy Beauteous Blue Lotus Feet --

And the present poet prays in the same way as Mooka Kavi to grant him the ability to express her glory in sweet poesy by not only erasing the unfortunate lines written by the creator on his brow, but writing in their place the capability to pen sweet strains in poetry -

मातस्त्वदीयपदपङ्कजरेणुरक्तैः
कारुण्यसान्द्रमधुभिस्तव पन्नखाग्राः ।
सेवानतेऽस्य दुरदृष्टलिपिं प्रमृज्य
माधुर्यधुर्यकवितां विलिखन्तु फाले ॥

Indeed, the Holy Feet of the Divine Mother have assumed the form of the rain-rich months to inundate the river of the poet's sweet poetic strains.

In the very first poem, the poet defines his purpose bowing to the Conjugality aspect, the Mother-aspect and the Child-aspect. He underlines throughout the length of the work the unadulterated joy of the child and the filial joy the Mother feels in the presence of the child. The child does not think of any purpose or end when he does something. He does not think of his self . Selfishness is born of ignorance. The child is above selfishness. The question "Why did God create this world ?" is the question posed by an ignoramus. A knowledgeable Seer answers this simply as 'बाललीलावत्' --- like a child's play. Thus God and child are equated. In this poem, the poet goes beyond even this and makes the child excel the godhead: "यदुकैशोरगुरवे".

The Child is also likened to the Universe in the Truine Concept. As the parents enjoy playing with the Child, so do the Divine Parents enjoy playing with their creation. But the Universe is full of troubles and tribulations in relation to its inhabitants, whereas the Child is full of joy in relation to itself and to its parents. The Universe is an embodiment of Maya whereas the Child is innocent अमायक -; it is beyond illusion. Therefore the Child is to be likened to the Universe to a certain extent only; beyond that pale, the child excels. Its innocent smiles, its selfless play -- all are beyond the pales of the selfish Universe.

The poet is a student of logic and his mind always probes deep into any subject he takes up. He delves deep into the relation between the conjugality concept and the child concept with the same shrewdness, especially in the poem "रजोबीजं संवित्" (39). He stresses that mere female and male principles do not suffice to reproduce the child; it requires for its production the all-important 'संवित्' --- 'knowledge' that shapes the male and female principles. The Vedic hymns that are recited during the nuptial rites are worth our perusal in this connection :

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा

Vishnu is the all-pervading principle : hence a symbolic name for electro-motor nerve forces. The all-pervading nerve forces are invoked to stimulate the child-bearing apparatus. Twasta is the architect ; the proper forms in relation to the species are made ready in blue print by this architectural principle. As a field is watered before the sowing of seeds, the different secretions are invoked to make ready the apparatus that it be able to hold the seed to fruition. Dhata is a symbol of time : propitious time for sowing the seed. सिनीवाली is the name for the light streak in darkness : it therefore indicates the knowledge that rests with the dark, unknowing male and female principles. सरस्वती is the name for a hidden flow : hence for the flow of the hereditary sense, of the knowledge of the lineage. The Aswins are again symbols of growth and spread : hence they are invoked to stimulate the cell divisions required for the growth of the foetus to be .

In this analysis we see that there are so many other principles involved in the process of reproduction. The consciousness principle is the main one among them. Without it, the zygote is "lifeless". This point is highlighted by the puissant word "संवित्" in the poem. This is also supported by the Indian Medicine (चरकसंहिता).

The backdrop against which this child aspect is dilated upon is the Mother aspect. It is well-known that in the mother aspect of womanhood, there is purity. The mother instinct is given to woman to save the man from the abysm of evil. The self-effacing mother instinct is the only saving grace for the whole creation. The poet says that this self-effacing instinct is brought out by the child alone:

जातशिशुर्जगति मातरमार्द्रभावां
त्यागैकमूर्तिमतुलां तनुते स्वपुष्ट्यै (107)

The poet's prays

प्रतिशिशु यदुकैशोरं प्रतिदम्पति पार्वतीश्वरैश्वर्यम्
प्रतिमनुजमेतु नित्यं वाक् परमेष्ठिस्ववैभवौज्ज्वल्यम् ॥ (104)

is worth noting because it invokes the grace of Brahma, Vishnu and Siva in granting to the world ideal parents, ideal conjugality and ideal children.

I have been given this opportunity to comment on this work in English for the benefit of those who, though interested in excavating the treasures in Sanskrit tongue, are not well-versed in understanding the language. Therefore the meaning, purport and essence of each poem are given in English to bring out the idea of the poet. To what extent I have become successful in doing so is to be judged by the readers. The rendering into English is done in proportion to my understanding. Any errors creeping in on account of my ignorance may please be overlooked with a broad heart.

3.1.99, Bahudhanya Pushya Poornima
HYDERABAD **Dr.Munjuluri Narasimha Rao**

श्रीः

# आत्मालोकः

आत्मा त्वं, गिरिजा मतिः, परिजनाः प्राणाः, शरीरं गृहम्,
पूजा ते विषयोपभोगरचना, निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः, स्तोत्राणि सर्वा गिरः,
यद्यत्कर्म करोमि तत्तदखिलं शम्भो ! तवाराधनम् ॥

मदात्मैव त्वमीश्वरः । मन्मतिरेव त्वदर्धाङ्गिनी गिरिजा । मत्प्राणा एव त्वत्परिजनाः । मच्छरीरमेव त्वत्कैलासगृहम् । मद्विषयानुभवरचनैव त्वद्ध्यानादिनीराजनान्ता पूजा । मन्निद्रैव त्वत्समाधिः। मत्पदसञ्चार एव त्वत्प्रदक्षिणविधिः । सर्वाः मद्गिर एव त्वत्स्तोत्राणि । किं बहुना? हेशम्भो ! मदीयो यावत्क्रियाकलापः त्वत्संतुष्टिकरमाराधनम् । अतः सन्तुष्टस्त्वं मोक्षमनुगृहाण- इति भावः । मोक्षेऽनुगृहीतेऽपीयमेव स्तुतिः " ईश्वर एव मदात्मा " इत्यादिविधया समन्वेति। तदियं स्तुतिः "मदभिन्नः ईश्वरः" इति भावात् "ईश्वराभिन्नः अहं" इति भावस्य प्राप्तिं प्रकाशयति। जीवन्मुक्तस्यापि दैहिकक्रियाकलापस्यादेहपतनमनिवार्यत्वात् ।

एषा तावत् प्रतिनित्यं स्वशिवपूजासमाप्तिषु अस्मत्पितृपादैः संप्रार्थ्यमाना "अहं ब्रह्मास्मि" इत्याकारक जीवेश्वरैक्यानुसंधानरूपिणी श्रीशङ्करस्तुतिः ।

ते हि मे दशवर्षदेशीयस्य गताः दिवसाः । शिवपूजा-भोजनानन्तरमस्मत्पितृपादाः कंचित्कालं स्वपन्ति स्म । तदा तत्पादसंवाहनं कुर्वन्ती अस्मन्माता अस्मान् वदतिस्म स्म- " पश्यत पुत्राः ! युष्मत्पितृपादाः कथं निद्रान्ति प्रबुध्यन्ति पुनर्निद्रान्ति च" इति । पितृपादमुखं दृष्ट्वा वयमप्यवोचाम -"मातः ! पितृपादाः नेत्रे निमील्य केवलं निद्रान्त्येव, न च प्रबुध्यन्ति " इति। तदाऽस्मन्माता वदतिस्म- "पश्यत युष्मत्पितृपादानां दक्षिणकराङ्गुलीषु पञ्चाक्षरीजपमालाम्"- इति । यदा वयमपश्यामः, पितृपादानां कराङ्गुलीषु रुद्राक्षजपमाला जप्यमानैव मन्दं मन्दं निश्चला भवति स्म । ततः कतिपयसमयानन्तरं पुनर्मन्दं मन्दं जप्यमाना आवर्तते स्म । एवं बहुशः संप्रवर्तते स्म। ततः 'किमेतदिति ' पृष्टा अस्मन्माता कथयति स्म - "युष्मत्पितृपादानां रुद्राक्षमालायां पञ्चाक्षरीमन्त्रजापः निद्राप्रारंभावधि प्रवर्तमानः निद्रायां निश्चलो भवति । ततः निद्रायां प्रबोधप्रारंभाच्च पुनः पञ्चाक्षरीजपः प्रवर्तते । अपि च , निद्रायामपि समाधाविव पञ्चाक्षरीजापः अविच्छिन्न एवान्तः प्रवर्तते । एषः युष्मत्पितृपादानां पञ्चाक्षरीजपयोगसमाधिविधिः इति । एतद्विधिं वयमनेकशोऽपश्याम । मार्गे यातायातेषु उपनिवेशनेषुच, इतरैः सह संभाषणादन्यत्र, अस्मत्पितृपादानां पञ्चाक्षरीजापः रुद्राक्षमालायामविच्छन्नः संप्रवर्ततेस्म । एतत्तु अस्माभिः पितृपादसमकालीनसहयोगिभिः सर्वैरपि विदितचरमेवासीत् । भर्त्रनुगामिनी अस्मन्माताऽपि यावद्दिवं शुचिव्रता पञ्चाक्षरीजपध्यानयोरेव निमग्ना भवति स्म । - एषोऽस्मत्पित्रोः दाम्पत्ययोगः पञ्चाक्षरीजपसहयोगयुक्तः सच्चिदानन्दयोगः ।

आनन्दस्तावत्प्रथमं लौकिकतया दाम्पत्य एव लभ्यः । तस्यमूलमादिदाम्पत्यमुमामहेश्वर दाम्पत्यम् । तच्च केवलानन्तानिर्वचनीयनित्यसत्य सच्चिदानन्दनिलयम् । तदेवमानन्दः अलौकिकतयापि दाम्पत्य एव निरूढः । अत एव बृहदारण्यके उक्तम् –

तद्वा अस्यै तदतिच्छन्दा अपहतपाप्माभयग्ं रूपम्

तद्यथा प्रियया संपरिष्वक्तो न बाह्यं किं चन वेद नान्तर

मेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं च न

वेद नान्तरम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामग्ं रूपग्ं शोकान्तरम् । (बृ. आर. उप. ३–३–२१)

स्त्रीसमालिंगितो बाह्यान्तरं न वेत्ति । तथैव पुरुषः प्राज्ञेनात्मना समालिंगितो बाह्यमान्तरं वा न वेत्ति । स च आप्तकामः, आत्मकामः अन्ते अकामः भवति । कामातीतो भवति ।

एषः केवलानन्दः परस्परतपस्संपत्फलायितपरस्परः एकस्मिन्नर्धनारीश्वरे उमामहेश्वरतत्त्वे संभाव्यः । एतादृशानन्दस्यैव फलरूपे आनन्दस्यैवानन्दस्वरूपे – अपत्य (शिशुत्व) मातृत्वे । एवं च द्वयमेकं सत् एकं च (सृष्ट्यै) द्वयं सत् परिवर्तमानमेकं परतत्त्वचक्रम् । भारतीय संप्रदाये दाम्पत्यं सर्वं अविविक्तवागर्थाविव उमामहेश्वरस्वरूपमेव । एवं च तद् विज्ञानमयं सच्चिदानन्दस्वरूपमिति सारांशः । एतादृशदाम्पत्यसंजनितमपत्यं जगत् सर्वं सच्चिदानन्दमयमेव भवितव्यम् । अत एव "सर्वं खल्विदं ब्रह्म " इति ब्रह्मवादिनो वदन्ति । एतादृशी तात्त्विकतैव मन्मातृस्तुतेः मूलाधारः ।

एषा स्तुतिर्मातरमवलम्ब्य जगन्मातरि विलीयते । अतएव मातृमूर्तिः केवलचन्द्रशेखरमातृमूर्तिरिव तत्र तत्र दृश्यमानापि अन्ततः सामान्यमातृमूर्तिरिव पार्यन्तिकतया जगन्मातृमूर्तिरेव प्रकाशते । पञ्चविंशतितमपद्यादापादमस्तकमम्बायाः प्रकाशः केवलतात्त्विकोत्तर दृष्ट्यैव दर्शितः । ततः सापत्यस्य दाम्पत्यस्य सच्चिदानन्दप्रणवपञ्चाक्षर्यात्मता ततः इडा पिङ्गला सुषुम्नान्मडीप्रयोज्ययोगत्मता च प्रदार्शिता । अन्तेचाम्बयां परब्राह्मीरूपं प्रदर्शितम् । पूज्यपादश्रीशङ्कर शिवानन्द-सौन्दर्यलहरी संभाव्य प्रेरितेन मया प्राधान्येन तदादर्शतयैवैषा "आनन्दन्दिनी" विरचिता । 'नन्दिनी' नाम्ना संस्कृतान्ध्रभाषयोर्मया, आंग्लभाषायां ब्रह्मश्री डा. मुंजुलूरि नरसिंहाराव महोदयैः च तात्त्विकव्याख्याः संपादिताः । आन्ध्रनन्दिन्या सह आन्ध्रलिप्यां आन्ध्रदेशीयानां सौलभ्याय एषा आनन्दनन्दिनी पृथक् पूर्वमेव मुद्रिता । इदानीं यावद्भारतीयानां इतरेषां चापि सौलभ्याय संस्कृताङ्ग्ललिप्योः संस्कृताङ्ग्लनन्दिनीभ्यां सह पृथक् एषा " आनन्दनन्दिनी" संप्रकाश्यते । तदिमां सर्वे सहृदयहृदयेन संभावयन्त्विति अभ्यर्थये । "कविः करोति काव्यानि रसं जानाति पण्डितः" इतिन्यायेन काव्यतत्त्वज्ञाः रसज्ञाः अव्याकृतानपि रसभावालङ्कारादि साहित्यतत्त्वविशेषान् संभावयन्त्विति सविनयं संप्रार्थये । वस्तुतः विचार्यमाणे नन्दिनीव्याख्यासहितायाः आनन्दनन्दिन्याः कर्तृत्त्वभोक्तृत्वे मातुः जगन्मातुरेव।

केवलं निमित्तमात्रमेवाहम् । जन्मदात्री मातैव प्रथममस्मभ्यं क्षीर+अन्नदात्री भवति । तस्मात् क्षीर+अन्नदातृत्वं मातुः प्रथमं लक्षणम् । ततः पित्रा सहकृतया सुज्ञानादिदातृत्वं मातुः पार्यन्तिकं लक्षणम् । एवं च मह्यमन्नदातारः सुज्ञानदातारश्च मातापितृसमाः स्तुत्याऽनया संस्तुता एवेति तानत्र सविनयभक्ति प्रणामं समुल्लिखामि ।

**विद्यार्थिदशायां** (1946) मद्रनगरे – ब्रह्मश्री गुम्पर्तिनरसिंहमूर्तिमहोदयाः, तिरुपतिनगरे ब्रह्मश्री कोम्पेल्ल दक्षिणामूर्तिशिरोमणयः नेल्लूरुनगरे ब्रह्मश्री मालकोण्डय्यन्यायवादिनः, ब्रह्मश्री काशिगेल शेषगिरिराव् न्यायवादिनः, तेनालि नगरे – (1947-1951)– ब्रह्मश्री मुदिगोण्ड रामनाथशर्माणः, ब्रह्मश्री मुदिगोण्ड अघोरपतिशास्त्रिणः,ब्रह्मश्री प्रभलवीरराघवुलु न्यायवादिनः धर्मपत्नी श्रीमती पुल्लम्मा, ब्रह्मश्री मुदिगोण्ड सुब्रह्मण्यशर्माणः धर्मपत्नी श्रीमती अन्नपूर्णाम्मा, ब्रह्मश्री अद्देपल्लिश्रीमन्नानारायणमूर्तिमहोदयाः ( श्रीमन्तुमहोदयाः) धर्मपत्नी श्रीमती लक्ष्मीत्रिपुराम्बा (सरोजिनीदेवी), ब्रह्मश्री जनस्वामि वेङ्कटेश्वरशास्त्रिणः धर्मपत्नी श्रीमती वर्धनम्मा, ब्रह्मश्री याबलूरि आदिनारायणशर्माणः धर्मपत्नी श्रीमती अन्नपूर्णम्मा, ब्रह्मश्री पिल्लुट्ल सीतारामशास्त्रिणः धर्मपत्नी अन्नपूर्णम्मा – एते सर्वे नकेवलं मह्यमन्नदातारः ते परमान्नमेव (परमेश्वराऽभिन्नमेवान्नं) प्रसादितवन्तः मयि सविनयात्मनिग्रहादिसद्भावसंपादनेन सुज्ञानसत्वसंवर्धकाः च अभूवन् ।

**एवमेव "असतो मा सद् गमय" "तमसो मा ज्योतिर्गमय" "मृत्योर्मा अमृतं गमय" इत्यौपनिषदुक्तिप्रकारेण मयि अज्ञानांध्यनिवारणपूर्वकं सुज्ञानामृतज्योतिराविष्कृतवन्तो महागुरवः- तत्र महामन्त्रगुरवः** मद्ज्येष्ठाग्रजन्मानः ब्रह्मश्री मूलम्पल्लिराजमल्लार्याः धर्मपत्न्यः श्रीमत्यः कमला–जानकी–भवान्यः, अस्मद् भावुकाः ब्रह्मश्री मानोकोण्डूरि भद्रय्यगुरुवर्याः धर्मपत्नी अस्मद्भगिनी श्रीमती अम्बम्मा, ब्रह्मश्री मानकोण्डूरिगङ्गाधरशास्त्रिणः धर्मपत्नी श्रीमती अन्नपूर्णम्मा, **प्राथमिक–पञ्चकाव्यविद्यागुरवः सिकिन्दराबाद नगरे मुन्नालाल, संस्कृतकलाशालायां** ब्रह्मश्री तूमुलूरि शिवरामकृष्णशास्त्रिणः धर्मपत्नी श्रीमती वर्धनम्मा, ज्योष्ठाग्रजन्मभिः सह कनिष्ठाग्रजन्मानः ब्रह्मश्रीं मूलम्पल्लि नागमल्लशर्माणः धर्मपत्नी श्रीमती ललिताम्बा **प्रवेशपरीक्षा विद्यागुरवः – 1945–1946**, ब्रह्मश्री साहित्यविद्वच्छिरोमणयः अनुमुलराघवशर्माणः धर्मपत्न्यौ श्रीमत्यौ वेङ्कटरमणम्मा–नागमणेम्मा च , **नेल्लूरु नगरे– मूलपेट संस्कृतकलाशालायां** ब्रह्मश्री गाजुलपल्लि हनुमच्छास्त्रिणः, श्रीमद्रङ्गरामानुजाचार्याः, **हैदराबाद नगरे– सीतारामबाग् वेदान्तवर्धिनी संस्कृतकलाशालायां मीमांसा वेदान्त प्रवेशपरीक्षाविद्यागुरवः** – श्री मद्कोयिल्कंदाळै अप्पन् शठगोपरामानुजाचार्याः श्रीमद्प्रतिवादिभयंकरवेदान्ताचार्याः, श्रीमद्देशिकाचार्याः , श्रीमद् ठंयालनरसिंहाचार्याः च, **तेनालिनगने कोटलक्ष्मय्यनायुडु संस्कृत कलाशालायां (1947–1951) साहित्य विद्याप्रवीणा परीक्षाविद्यागुरवः** तर्कव्याकरणसाहित्यब्रह्मविद्यारत्नाकराः ब्रह्मश्री सूरि रामकोटिशास्त्रिणः

धर्मपत्नी श्रीमती भानुमतम्मा, ऋग्वेद–न्यायमीमांसावेदान्तविद्यापारीणाः ब्रह्मश्री वाजपेययाजुल वेङ्कटेश्वरशास्त्रिणः, धर्मपत्नी श्रीमती लक्ष्मीकान्तम्मा, वाराणसीय प्राचीन समग्र सस्वर पाणिनीय पातञ्जलादिसमस्तशब्दशास्त्रे ब्रह्मविद्यायांच पारंगताः ब्रह्मश्री जनस्वामि वेङ्कटेश्वरशास्त्रिणः धर्मपत्नी श्रीमती वर्धनम्मा च ; कलाशालाविद्यां समाप्य हैदराबादनगरे प्रभुत्वविद्यालयेषु आचार्यतया नियुक्ते मयि आत्मीयतया संस्कृतान्ध्रसाहित्ययोः सार्वत्रिकप्रगतिप्राप्त्यै सुपरिशोधनादृटिं सुरचनादृष्टिंच समुन्मीलितवन्तः विद्वज्जनमान्याः महाप्राज्ञाः उभयभाषाप्रवीणाः ब्रह्मश्री पेरवलि लिङ्गय्यशास्त्रिणः धर्मपत्नी श्रीमती रत्नम्मा, विद्वच्छिरोमणयः ब्रह्मश्री केशवपंतुल नरसिंहशस्त्रिणः धर्मपत्नी शकुन्तलम्मा, विद्वच्छिरोमणयः कप्पगन्तुल लक्ष्मणशस्त्रिणः, धर्मपत्नी श्रीमती अन्नपूर्णम्मा, परिशोधकाः आदिराजु वीरभद्रराव् महोदयाः, **उस्मानिया विश्वविद्यालये** –– परिशोधनप्रेरकाः ब्रह्मश्री आचार्य अमरेशं राजेश्वरशर्माणः धर्मपत्नी श्रीमती लक्ष्मीनरसम्मा, परिशोधनविषयक्षेत्रे 'महाभारतं' बीजमिवोप्तवन्तः प्रातस्मरणीयाः महामनीषिणः आचार्य खण्डवल्लि लक्ष्मीरजनं महोदयाः, तद्बीजस्य "महा भारतं –विश्वविज्ञानकोशः" इति मत्परिशोध्यविषयरूपेण अङ्कुरतामापादयन्तः कलाप्रपूर्णाः आचार्याः दिवाकर्ल वेङ्कटावधानिनः, ततः तस्यैव परिशोध्यविषयस्य पर्यवेक्षकगुरूरूपेण शाखोपशाखप्रकाशनेन सरसपुष्पफलकल्पतरुतामा विष्कारयन्तः जानपदवाङ्मयतत्त्वपरिशोधनविधातारः श्रीमत्प्राचार्य बिरुदुराजुरामराजगुरुवर्याः धर्मपत्नी श्रीमती सूर्यादेवी च । एतेभ्यस्सर्वेभ्यो मातापितृसमेभ्यः उमामहेश्वरस्वरूपेभ्यः स्तुत्याऽनया 'आनन्दनन्दिन्या' सविनयभक्ति नमस्सुमाञ्जलीनर्पयामि ।

संस्कृतान्ध्राग्लनन्दिनीभिः आनन्दन्दिन्याः ग्रन्थद्वयमुद्रणे धनदानेन सहकृतवन्तः उदाराः महोदयाः

5000/- **Srimati Nagratnamma,** Lecturer in Govt Colleges, Motınager, Hyderabad.

5000/- **Sri. Ravipati Balakrishna Rao.** Advocate, & **Smt. Jayaprada Devi,** Saidabad Colony, Hyderabad.

3000/- **Chiranjeevi Mulampalli TarunenduSekhar,** BE. (Mech), Project Leader in Satyam Computers, & **Smt. Padma Bhavani** Hyderabad.

1000/- **Sri Bukka Veerasam Gupta & Smt Satyalaxmi.** issamia Bazar, Hyderabad.

1016/- **Sri BejagamVenkatesam Gupta & Smt. Parijatamma** Akbarjah Bazar, Hyderabad.

501/- **Sri. Turga Somasundaram & Smt. Venkataratnamma** Madhavnagar, Saidabad, Hyderabad.

501/- **Sri. Ch. Venkata Rama Reddy** (Retd. Addl. Dy Commissioner of Police) & **Smt. Suryamma** Saidabad Colony, Hyderabad.

501/- **Sri. Mahender & Smt. Lalita**, Malakpeta, Hyderabad.

501/- **Sri. Golivenkatesam & Smt. Senamma.** Feelkhana, Hyderabad.

एतान् सर्वान् माता जगन्माता स्वसंपूर्णानुग्रहेण वंशपारम्पर्यं सर्वतोमुखाभिवृद्धिं च दत्त्वा संरक्षतु।

आनन्दनन्दिन्याः आङ्ग्लभाषायां "नन्दिनी " नाम्ना तात्त्विकव्याख्यां विरचयद्भ्यः, अस्मत् प्रियमित्रेभ्यः अस्मत्तृतीयपुत्राय स्वीयकन्यादानेन प्रियबन्धुभ्यः, विवेकवर्धिनी कलाशालायां भौतिकशास्त्राचार्येभ्यः ब्रह्मश्री डा. मुञ्जुलूरि नरसिंहराव् महोदयेभ्यः कृतज्ञताञ्जलिं समर्पयामि । तथैव आंग्लनन्दिनीव्याख्याकृतिं स्वीकृतवन्तौ श्रीमुञ्जलूरिनरसिंहरायस्य पितरौ श्री सूर्यप्रभावती अप्पाजीरावौ "आनन्दनन्दिनी" स्तुत्यैव सविनयभक्ति साञ्जलिबन्धमभिवादये ।

आनन्दनन्दिनीमामूलाग्रं परिशील्य संस्कृत्य स्वात्मीयभावसमसम्मितां सम्मान्य सौदर्येण कवितया संभाव्य मामाशीर्भिरेधयद्भ्यः अस्मत्कनिष्ठाग्रजन्मभ्यः ब्रह्मश्री विद्वान् मूलम्पल्लि नागमल्लशर्मभ्यः, आनन्दनन्दिन्यां तात्त्विकपरिशीलनेन स्वीयामूल्याशीर्भिश्चानुगृह्णद्भ्यः अस्मद्गुरुवर्येभ्यः तर्कव्याकरणसाहित्यब्रह्मविद्यारत्नाकरेभ्यः ब्रह्मश्री सूरिरामकोटिशास्त्रिभ्यः, आनन्दनन्दिनी मामूलाग्रं सहृदयहृदयेन संपरिशील्य स्वानन्दबिन्दुनैव सुधासारमासारयद्भ्यः संस्कृतान्ध्राग्लहिन्दीतमिलादिबहुभाषाकोविदेभ्यः साहित्यशास्त्रविद्वद्वेदान्तशिरोमणिभ्यः सुप्रतिष्ठितप्रत्नूत्नसारस्वतप्राज्ञप्राचार्येभ्यः संस्कृतालङ्कारसाहित्यरसगङ्गासर्वस्वमान्ध्र्यामवतारितवद्भ्यः ब्रह्मश्री पुल्लेल श्रीरामचन्द्रमहोदयेभ्यः च, धन्यवादपूर्वकं सविनयभक्तिप्रणामाञ्जलीनर्पयामि।

मद्भावानुगुण्येन पारमाणविकपञ्चाक्षरीयन्त्रेण मुखचित्रमारचितवद्भ्यः मित्रेभ्यः कामारेड्डि प्राच्यकलशालायाः आचार्येभ्यः ब्रह्मश्री डा. अयाचितं नटेश्वरशर्मभ्यः, आनन्दनन्दिनीं विश्वानन्दनन्दनवनमिव संमुद्रितवद्भ्यः **आर् के प्रिण्टर्स नाम्पल्लि,** है.बा. यजमानिभ्यः विश्रान्तसंस्कृतकलाशालाचार्येभ्यः साहित्यविद्याप्रवीणेभ्यः वैयाकरणपरिशोधकेभ्यः ब्रह्मश्री डा. सीतारामाञ्जनेयुलु महोदयेभ्यः धन्यवादपूर्वकं नमस्सुमाञ्जलिमर्पयामि ।

एतद् "आनन्दनन्दिनी" ग्रन्थमुद्रणे अर्थिकसहायं कुर्वते श्री तिरुमलतिरुपति देवस्थानयाजमान्याय दिव्यश्रीवेङ्कटेश्वरस्वरूपायापि सविनयभक्ति कार्तज्ञमाविष्कुर्वन्नमस्सुमाञ्जलिमर्घयामि ।

'वन्देमातरम्'

स्वस्तीश्रीबहुधान्य पुष्यपूर्णिमा
शुक्रवासरः, 1–1–1999

एवम्
**मूलम्पल्लि चन्द्रशेखरशर्मा**

"तेजस्वि नावधीतमस्तु । मा विद्विषावहै "

इतिशम् ।

# विषयानुक्रमणी

ॐ नमो गणेशाय ।

ॐ नमः शिवाभ्याम् ।

ॐ नमः श्रीमात्रे ।

# ॥ आनन्दनन्दिनी ॥

## (ANANDANANDINI)

श्रीगाणेशं तेजो नित्यश्रीसिद्धिबुद्धिसम्पन्नम् ।
निर्विघ्नशीघ्ररसवत्कविताशक्तिं ददातु मे सकलाम् ॥

**1. नमो दाम्पत्यायाद्वयहृदययोगाय शिवयोः
नमो मातृत्वाय प्रकृतिमधुरायात्मजशिशौ ।
शिशुत्वायाऽप्येवं सहजललितायात्मरसस-
च्चिदानन्दैश्वर्यस्फुरितयदुकैशोरगुरवे ॥**

**नन्दिनी व्याख्या**

वासरसरस्वति त्वं स्फोटय वाचं मयि स्ववर्णैकाम् ।
विश्वं विश्वात्मानं द्योतय तस्यां मनोज्ञचिद्रूपैः ॥
भारति ! भारतवर्षं सर्वं सर्वज्ञतावकश्रीभिः ।
संशुद्धं सर्वजनैः समृद्धमाचन्द्रतारमनुगृह्णीयाः ॥
ज्ञानसरस्वति ! लोकं विद्वेषेर्ष्याप्रलोभमदमात्सर्यैः ।
दुष्कामेन च मुक्तं स्वकर्मचतुरं विधेहि सौम्यश्रीकम् ॥
सारस्वतैकमूर्तिः सरसा संनृत्यतान्मनोज्ञा मे ।
रसनायां वागीश्वरि सर्वैस्सच्चित्कलाविलासैस्ते ॥
वासरवासिनि ! तावकसच्चिन्मूर्तौ मदीयचित्सर्वस्वम् ।
मूर्तित्वमेत्य विश्वं व्याप्नोत्वाचन्द्रतारमखिलं नित्ये! ॥
वीणापाणि ! ममेमं वीणादण्डं कशेरुकाविष्कीर्णम् ।
वादय संस्कृत्योच्चैर्नादय ब्राह्मीं स्वगीतिमखिलानन्दाम् ॥
ज्ञानसरस्वति ! भौतिकमाध्यात्मिकमस्य देहमाविशतात् ।
सत्त्वं सर्वाङ्गीणं सचेतनं नव्यरस्यमात्मीयम् ॥
ब्रह्ममयीं ब्रह्मकलां ब्रह्मोद्यां ब्रह्मनादपारम्याम् ।
ब्रह्मात्मैकां ब्राह्मीं ध्याये नित्यं परब्राह्मीम् ॥

**अन्वयक्रमः** – शिवयोः अद्वययोगाय दाम्पत्याय नमः आत्मजशिशौ प्रकृतिमधुराय मातृत्वाय नमः सहजललिताय आत्मरससच्चिदानन्दैश्वर्यस्फुरितयदुकैशोरगुरवे शिशुत्वायापि एवं नमः ।

**नन्दिनी व्याख्या** :– आनन्दनन्दिनीनाम्नी इयं स्तुतिः अस्मन्मातरं विशालाक्षीमवलम्ब्य जगन्मातरमनुस्तौति । पितुः उत्तररूपतया मातरमनुगम्यैव एषा स्तुतिः पितरं ततः जगतिपतरमप्यनुगन्त्रीति अनुगन्तव्यम्। तैत्तिरीये "**पितृदेवो भव**" इत्यनेनैव मातृदेवभवनानुशासने सिद्धे प्रथमतयैव पृथक् "**मातृदेवो भव**" इत्यनुशासनेन – विश्वस्मिन् जगति मातुः सामान्येन जगन्मातृतया सर्वदेवप्राधान्यं प्रथमनमस्कार्यत्वं च व्यज्येते , सर्वसङ्गपरित्यागिनापि सर्वनमस्कार्येण संन्यस्तेन माता नमस्कार्या इत्यस्य शास्त्रसिद्धत्वात् ।

मातुस्तावन्मातृत्वमपत्यापेक्षम् अपत्यं च स्त्रीपुरुषयोः दाम्पत्यापेक्षमिति हेतोः आदौ आदिदाम्पत्यं शिवयोः अस्मन्मातापित्रभिन्नयोः सर्वाधीश्वरतया प्रणम्यते। "**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ**" इति स्वप्रथमकृतौ रघुवंशमहाकाव्ये स्वाद्यस्तुतौ, जगन्मातापितृरूपं दाम्पत्यतत्त्वं जगदपत्यत्त्वं च लौकिकालौकिकवागर्थ (तत्त्वमसि अहं ब्रह्मास्मि इत्यादि महवाक्यार्थ) तत्त्वप्रतिपत्तये प्रणम्यतया कविकुलगुरुणा कालिदासमहाकविना सुव्यञ्जिते । अत्र तु दाम्पत्य- मातृत्व-शिशुत्वरूप तत्त्वप्रणामेन तदनुगतपरतत्त्वं शिवपितृतत्त्वं अपि प्रणम्यतया सुव्यञ्जितमिति विशेषः ।

अस्मन्माता तु विशालाक्षीनाम्नी । पिता शिवलिङ्गार्यनामा । अम्बम्मा-मल्लिकाम्बे, राजमल्लार्य - नागमल्लार्य - चन्द्रशेखरशर्माणश्च वयं सोदराः ।

वागर्थवत् परस्परैकात्म्यव्यञ्जकतया संपृक्तयोः स्त्रीपुरुषयोरद्वयरसार्द्रहृद्योग एव दाम्पत्यम्। अत्र हृच्छब्देन हृद्वचोदेहाः अवगन्तव्याः । तथा च अद्वयरसार्द्रहृद्वचोदेहयोगो दाम्पत्यमिति तात्पर्यम्। तादृशयोगस्य अर्धनारीश्वरात्मना शिवयोरेव (तल्लीनत्वादस्मत्पित्रोश्च) योगे संभवात्स एव योगः आदिदाम्पत्यतया सर्वोन्नतस्सर्वेश्वरश्च प्रणम्यते । "**अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च** " इत्युक्तवतापि दाम्पत्यद्वन्द्वस्य स्वात्मत्वं व्यञ्जितं भगवता श्रीकृष्णेन ।

एतादृशदाम्पत्यस्य रसोत्तरे द्वे फले भवतः । अपत्यं मातृत्वं चेति । उभयमप्यानन्दात्मकम्। प्रथमं तावत् स्वात्मैकचिदानन्दरूपम् । द्वितीयं तु स्वात्मनः अपत्यस्य च आनन्दरसपारावाररूपम्। अत एव प्रकृतिमधुररूपतया प्रणम्यते। अपत्येऽपि शैशवं सहजललितमधुररूपतया, आत्मरसे आत्मानन्दे सच्चिदानन्दैश्वर्यनिधानरूपेण यदुकैशोरस्य गुरुरूपेण च प्रणम्यते ।

तदेवमस्मिन् पद्ये आदिदाम्पत्यस्य अद्वयरसात्मयोगः, मातृत्वस्य प्रकृतिमाधुर्यं, शैशवस्य च यदुकैशोरस्यापि स्वगुरुत्वस्फोरकं सहजललितात्मरससच्चिदानन्दैश्वर्यं च विश्वेश्वरपारमैश्वर्यरूपं सहृदयगम्यं आविष्क्रियन्ते। महाकविना भवभूतिना "**आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते** " इति अपत्यस्य दम्पत्योः (विचार्यमाणे सर्वस्य) सुदृढाऽऽनन्दग्रन्थित्वं अविनाभावियोगित्वं च प्रतिपादितम्। तदेवमानन्दः मातुः पितुः अपत्यस्य चेति त्रिरूपो भवति।

तादृशस्याप्यानन्दस्य एषा स्तुतिः आनन्ददायिनीति कृत्वा स्तुतेरस्याः "आनन्दनन्दिनी"ति नाम्न औचित्यं संभाव्यते।

**अथ प्रतिपदव्याख्या नन्दिनी** :– शिवयोः= विशालाक्षीशिवलिङ्गार्ययोः पार्वतीपरमेश्वरयोरित्यर्थान्तरम् । अद्वयश्चासौ हृदययोगः तस्मै, ऐकात्म्यमापन्नो यो योगश्शिवयोः तदात्मकाय दाम्पत्याय, नमः =प्रणामः सर्वोत्कृष्टदिव्यत्वसंभावनमित्यर्थः । नमस्कारस्य सामान्यतः स्वावधिकोत्कृष्टत्वज्ञानानुकूलव्यापारत्वात् । "**तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः** " इति- तैत्तिरीयोक्त्या सर्वकामातीतत्वस्य सर्वेषां कामानामेतद्दाम्पत्यवशवर्तित्वस्य च संभावनमिति विशिष्टो भावः । (शिवस्य अर्धनारीश्वररूपे वामभागे पार्वतीहृदयेन शिवहृदयस्यैकत्वात् वैद्यविज्ञानविचारानुगत्यापि शिवहृदयमद्वयमेवाभवदित्यपि मन्तव्यम् ।)आत्मजशिशौ= आत्मन एव जनिते शिशौ, प्रकृतिमधुराय – प्रकृत्यैव = सहजतयैव, मधुराय= स्वस्याः शिशोश्च आनन्दात्मकाय, मातृत्वाय =जननीतत्वाय, नमः = सर्वोत्कृष्टत्वसर्वकामातीतत्वसंभावनमिति भावः । सहजललिताय = स्वजन्मना सहैवोद्गतं यथा तथा, ललिताय= अनिर्वचनीयानन्दसुन्दराय, आत्मरससच्चिदानन्दैश्वर्यस्फुरितयदुकैशोरगुरवे – आत्मरसे = शिशोः स्वात्मानन्दे, तदभिन्नतया स्वयं प्रकाशमानं यत्, सच्चिदानन्दैश्वर्यं – सत्= कालत्रयाबाध्यं सदित्यस्तिमात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते तत् सदित्युच्यते तदेव ब्रह्म । चित् = अलुप्तप्रकाशः, समस्तवस्त्ववभासि केवलं ब्रह्मज्ञानं चिदिति ज्ञानमात्रम् । चेतन्त्यनेन जानन्तीति चित् ।आनन्दः= सात्विकैकाग्रप्रतिबिम्बितः सुखरूप आत्मा, तादृशात्मनि प्रतिबिम्बिता वृत्तिर्वा, निरुपाधिकेष्टता, ब्रह्मज्ञानानन्द इति सङ्ग्रहार्थः । तस्य ऐश्वर्ये = इच्छानभिघातात्मके सर्वेच्छापरिपूर्णरूपे शासनकर्तृत्वाद्याधिकारिके च वैभवे, स्फुरितः = द्योतितः, यदोः=यादवश्रीकृष्णस्य सम्बन्धिनः, कैशोरस्य =शिशुत्वस्य बाल्यस्य च, गुरुः= आचार्यः, "**एवमेव वर्तितव्यम् । एवं न** " इत्याद्यानन्दसुन्दरतत्वोपदेशकः, येन तस्मै शिशुत्वाय, परमात्मनः श्रीकृष्णस्य पारमैश्वर्यलीलाविलासनिधानस्य शैशवस्यापि, गुरवे=घनाय शिक्षकाय, व्यापकतया अपरिच्छिन्नाय (सर्व) सामान्यरूपाय शिशुत्वाय, श्रीकृष्णबाल्यस्य विशेषरूपतया परिच्छिन्नत्वात् व्याप्यरूपत्वमिति भावः ।तस्मै = तादृशाय शैशवाय बाल्याय चापि, एवं=दाम्पत्य-मातृत्वाभ्यामिव, नमः =प्रणामः सर्वोत्कृष्टदिव्यत्वस्य सर्वकामातीतत्वस्य वशीकृतसकलकाम्यस्य च संभावनमिति तात्पर्यम् ।

स्त्री, पुरुषः, तयोर्योगो (वैवाहिकयोगो) दाम्पत्यम् । तज्जन्ये च मातृत्वशिशुत्वे। एतत्त्रयमपि योगानन्दात्मकम् । अतस्तेभ्यस्त्रिभ्यो नमः । तैत्तिरीयोपनिषदि- "प्रजातिरमृतमानन्द इत्युपस्थे " इति दैवीषु समाज्ञासु ज्ञानेषु (समाज्ञाः ज्ञानानि शं. भा.) प्रजात्यमृतानन्दानां स्थितिं प्रकाशयित्वा तदुपासनक्रमे " **तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः** " इति निरुक्तम् । अत्र नमश्शब्दः सर्वकामवशीकारेण सर्वकामाधीश्वरत्वेन च सर्वकामातिशायिपरतत्त्वस्य

उपासनापरतयाऽपि व्याख्यातुं शक्यते । तेनोपासकस्याऽपि सर्वकामवशीकारः सर्वकामाधीश्वरत्वं सर्वकामातिशायिपरतत्वैकात्म्यं च सिद्ध्यति । एवं चात्र प्रकृतमङ्गलश्लोके नमश्शब्देन विशालाक्ष्याः शिवलिङ्गार्यस्य च (शिवायाः = शक्त्याः, शिवस्य चेत्यर्थान्तरम् ) तयोर्दाम्पत्यस्य तज्जन्यशिशुत्वरूपापत्यस्य च साकल्येन केवलानन्दात्मत्वमुपास्यमिति –व्यज्यते। साक्षान्निरन्तरतया मनोवाक्कायैरनुषक्तानुरागस्य मातृत्वस्य, तदनुगम्यात्मीयानन्दनिलयस्य पितृत्वस्य च, तदुभयानन्दनिधानस्य स्वात्मैकानन्दात्मकस्य शिशुत्वस्य च साकल्येन अनन्याधीन–सर्वकामातिशायि केवलानवच्छिन्नानन्दात्मत्वमुपास्यमिति सारांशः ।

"तन्नम इत्युपासीत' इत्यत्र शांकरभाष्यम् – "तन्नम इत्युपासीत" "नमनं नमः नमनगुणवत्। तदुपासीत । नम्यन्ते प्रह्वीभवन्त्यस्मा उपासित्रे । कामाः काम्यन्त इति भोग्याः विषयाः इत्यर्थः"। अत्र नमनगुणवत्त्वं- " कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् " इति कालिदासनुत्यनुसारेण शिवस्य कान्ताकामवशत्वं बाहिरं यद्यपि दृश्यते तथापि आन्तरे तावत् अविषयमनस्केभ्योऽपि यतिभ्यस्सर्वेभ्यः अगम्यतया परस्तात् स्थितः, विकारहेतुसंयोगेऽपि (अर्धनारीश्वरत्वात) कामाद्यतीतः" इत्येतादृशं भवति । नमन्ति स्ववशे भवन्ति कामाः सर्वे कामाः यत्र तत्तत्त्वं दाम्पत्यं -पितृत्वं -मातृत्वं - शिशुत्वं च नमश्शब्दवाच्योपास्यं एकैकं भवतीत्यर्थः । तदुपासनेनोपासकानामपि सर्वेषां कामानां स्ववशे स्थितिः, सर्वकामातीतत्वं च सिद्ध्यतः । उपासकानामुपास्यप्रभावप्राप्तिरेव गम्यमिति सर्वविदितम् ।

**Nandini :–** शिवयोः = Of Parvati and Siva [of Visalakshi and Sivalingarya], अद्वयहृदययोगाय दाम्पत्याय नमः = Salutation to the single–hearted conjugal union, आत्मजशिशौ प्रकृतिमधुराय मातृत्वाय नमः= Salutation to the Motherhood which, mellifluous by nature, flows out towards the offspring as mellow joy, सहजललिताय+आत्मरस सच्चिदानन्दैश्वर्यस्फुरितयदुकैशोरगुरवे शिशुत्वायाऽपि + एवम् = [Salutation] also to the flowery infancy full of Soul - Joy and which stands tutor- like to even the sweet childhood of Sri Krishna.

**Commentary :-** This eulogy named "Anandanandini" is written with a view to eulogize my mother Visalakshi in the form of Divine Mother. This naturally includes the " latter " form, viz., the Father also: " **माता पूर्वरूपम् । पितोत्तररूपम्** " ( तैत्तिरीयोपनिषत् ) The same Upanishad also spells out separately, and that too in the very beginning " **मातृदेवो भव** " although " **पितृदेवो भव** " includes it, thus promulgating the greatest importance of the mother, representative of the Divine Mother , amongst all sundry godheads. The grammatic

rules of Panini ( " पुमान् स्त्रिया " and " पिता मात्रा ") make the word पितृ include 'मातृ' also, but the injunction " मातृदेवो भव " in the Upanishad seems to point to us that these rules are to be followed in cases other than those concerning the ( Divine ) Mother. A Sanyasi (personified detachment) is saluted by everyone including his father, but he himself is enjoined to bow to his Mother. This means that a mother, like the Divine Mother, is a bestower of true wisdom even to a Sanyasi.

The Motherhood of a woman implies the begetting of an offspring. The offspring comes out of the conjugal relationship of a man and a woman. Therefore, at the outset, the conjugal union of Siva and Parvati (which is actually a spiritual union) is being saluted as a symbol of the parents of the Universe. The Kavikulaguru Kalidasa, in his first epic -poem "Raghuvamsa" maintained that the two — conjugality as seen in the form of the begetting of the Universe, and the offspringhood as seen in the form of the Universe — richly deserve our unconditional salutations." जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ " There, the quartet of Mother, Father, conjugal union and infant were extolled; here, the trinity of conjugality, motherhood and offspringhood are saluted through which the implied fatherhood of Siva shines forth.

The commingling of joy - drenched hearts of man and woman expressing oneness mutually — like word and its meaning— is what is termed here as conjugal union. The union of "hearts" implies the union of not hearts alone, but of word and body as well. Such a consummate union is possible only for Parvati and Parameswara in the form of Ardhanariswara. My parents had this union in the form of oneness of feeling. Such a man - and-woman- relationship is saluted here as the all- high and all- powerful. Bhagawan Sri Krishna too identifies himself with this duet when he says " अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च । " ( Bhagavadgita)

Such a conjugality has two juicy fruits : one is offspring and the other is Motherhood. Both are joy- laden. The first is Bliss - form engrossed in one's own Soul - joy, the second is a Sea of joy both to oneself and to the offspring. Therefore, motherhood is here

saluted as sweet by nature, and the childhood as delicate and beautiful, sweet and joyful by nature. The great poet Bhavabhuti also extols the child as the joy-knot of wife and husband. "आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ॥"

Thus joy is of three kinds : of the Mother, of the Father and of the child. This eulogy gives joy even to that threefold Joy and hence it is named aptly as " Anandanandini".

**Special Comments :**

अद्वयहृदययोगः – a union which culminates in becoming One - Soul: that is what is true conjugality, not simply bodily union. Hence it is being saluted as all - eminent. The word नमः has a special connotation. According to the तैत्तिरीयोपनिषद्, true conjugality is beyond all desires "तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः ।" . All desires stand in its control. All powers naturally flow towards those who follow this true conjugality. The Mother gives suck to her child with unconditional love; the milk, nectar-like, nourishes both the body and mind of the child and makes it joyous too. Therefore such a motherhood is here saluted as one which is capable of making the children perfect and powerful because it is all-perfect and beyond desires.

If you wish to see, nay, taste the Sat- Chit- Ananda form of your Soul and the Over- Soul, then look towards the infant ( शिशुः ), you have it instantaneously.

दिग्वाससं गतक्रीडं जटिलं धूलिधूसरम् ।
पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥

The child is not covered by any clothes like दिगम्बरशिव; it is engrossed in playing like क्रीडालोलशिव; its body is all smeared with dust like that of भस्मगुण्ठितशिव; its dishevelled hairs stand knotted like those of जटाजूटिशिव. Blessed are those who perceive Parameswara Siva in the form of their child.

We call शिशु as अज्ञानी and अमायक as well -- contradictory terms indeed, because the first indicates its lack of wisdom whereas the second denotes its abounding wisdom as it is artless and innocent. To make both these words synonymous, the first term is to be de-

rived as we derive the word " अनुत्तमः "– " नास्ति उत्तमः यस्मात्सोऽनुत्तमः "। Thus अज्ञानी is to be derived as " नास्ति ज्ञानी यस्मात् सोऽज्ञानी । ". That the infant is a ज्ञानी is vouched by गर्भोपनिषत् , चरक संहिता and श्रीमद्भागवतम्।

पञ्चात्मकः समर्थः पञ्चात्मकतेजसाधिगन्धरसश्च सम्यग्ज्ञानाद् ध्यानाद् अक्षरमोंकारं चिन्तयति । तदेव चैकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोडशविकाराः शरीरे तस्यैव देहिनोऽथ नवमे मासे सर्वलक्षणसंज्ञानकरणसम्पूर्णो भवति । पूर्वजातिं स्मरति। शुभाशुभं च कर्म विन्दति। " ( गर्भोपनिषत् )

" स्त्रीपुंयोगे पुरुषस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात्संभवति। स तथा हर्षभूतेनात्मनोदीरितश्च अधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्त्योचितेन पथा गर्भाशयमनुप्रविश्यार्तवेन संसर्गमेति ।" ( चरकसंहिता । )

" एवं दशमास्यः ऋषिः गर्भे कृतमतिः गर्भे सूतिकावातेनावाक्शिरो
भूत्वा निष्क्रामति निरुच्छ्वासः हतस्मृतिः भूत्वा भूमौ पतति ।। " ( श्रीमद्भागवतम् )

From these foregoing authorities, we understand that the fertilized ovum contains the allembracing wisdom of the Lord God, just as an atom is pregnant with enormous power. Hence that subtle complex of semen and ovum is All- knowing, All- powerful Truth and Joy. Though the infant is covered by Oblivion and Ignorance, the rays of wisdom will be emanating from it, just as a strong source of light makes its wrapper enlightened. An infant is mostly in निद्रा समाधि. The etymology of the word शिशु as " अतिशयेन शेते – इति शिशुः" points to this. Excepting the times in which it is beset with the pangs of hunger etc., it responds joyously with smiles alone for every enquiring gesture and sound that we make. As the child grows, it includes all things into its joy- laden plays. As the universe is nothing but a toy - play for the Lord God, to the child every thing is but a play. It enjoys, even in the absence of anybody ( in solitude) moving its arms and legs, engrossed in pure soul - joy. As time passes, with worldly influences affecting the individual, the latter's soul–joy becomes restricted, flashing forth only occasionally. In childhood, the power of remembrance is remarkable; in old age, it dwindles in general. Because of very few worldly experiences, a young yogi can attain the returnless abode and immortal joy. The lesser the worldly influences and experiences, the earlier the individual attains Yoga Samadhi. Because of this , people like

शिव एव कवचं भवति तदिव, इह=अस्मिन् लोके, त्वां, सुखं=यथासुखं परित्रात्री च इति =सर्वाङ्गीणं अन्तर्बहिरपि रक्षयित्री चेत्यर्थः। अत्र शिवकवचशब्दार्थः =शिवा च शिवश्च शिवौ तावेव कवच इति मुखचन्द्रवत्समासः। "शिवश्शक्त्यायुक्तो यदि भवति शक्तः प्रभवितुं" इति श्रीशङ्करोक्त्यनुसारेण केवलशिवस्य त्राणप्रधानवकचीभवने अशक्तत्वात्। मङ्गलार्थकस्य शिवशब्दस्य सर्वमङ्गलाया एव प्राधान्येन वाचकत्वं तदभिन्नयोगेन केवलशिवस्यापि तद्वाचकत्वमित्यवधेयम्। अस्मत्कुटुम्बे सर्वेषामपि नित्यशिवकवचोपासकत्वमृद्याप्यस्ति। एतादृशरूपिण्यः तव प्रणयमकरन्दामृतमनस्सिताम्भोजात् =प्रणयमकरन्दामृताभिन्न मनस्सिताम्भोजं = धवलं मनःकमलं, तस्मात् जाताः = समुद्भूताः, वाचः=वचांसि। मम हृदि=मन्मनसि, अद्यापि दृढाः =स्थिराः प्रभासन्ते इति भावः।

मम मातुरन्तिमसन्तानतया मयि तस्याः प्रेमातिशयः। तेन मत्संवर्धने स्वयं जीवति वा न वेति संशयः मन्मातरमतीव बाधते स्म। तस्यां परलोकगतायां मम पालनादिकं को वा करिष्यतीति दुःखातिशयः। तेन बाधिता सती स्वतपःप्रभावेन स्वस्यां शरीरिकतया मृतायामपि शिवकवचमन्त्रवत् स्मृतिमात्रेण मां परित्रास्यामीति वदति स्म। तदेतत्सर्वमत्रानुस्मरणीयम्।

**Nandini :** These are the words of the Mother "अहं ते भर्त्री" = I am your maintainer, "प्रियतमपदार्थैः सुमधुरं सदा भोज्यादात्री" =I cater to you always what is pleasing and sweet to you, "इह सुखं परित्रात्री च शिवकवचवत्"= In this world I am your protector like the Sivakavachamantra, इति तव प्रणयमकरन्दामृतमनःसिताम्भोजाज्जाताः सुवाचः =these your good words born out of your heart-lotus brimming full with love-nectar, मम हृदि दृढाः= are ringing steadfast in my heart.

As the poet is the youngest, his mother was always worried about his maintenance after her death: "she tending to the grave, he craving to be fed". With this idea weighing heavily on her mind, she had provided him with a "permament" buttress, by catering to him प्रियतमपदार्थाः – worldly objects that are transitory which are of course pleasing but the other-world-winning qualities also which are permanent,and hence, are the most pleasing. She had catered those most pleasing 'objects'. As she is the giver of those permanent 'assets', she is said to have been protecting him like Sivakavacha. An ordinary armour protects the body alone; the Sivakavacha protects even the inner soul too. The Sivakavacha is to be interpreted as that 'verbal' armour forged in the Union of Siva and Sakti.(शिवा च शिवश्च शिवौ शिवयोः कवचं शिवकवचम्) It is said. "शिवः

शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम् ।" The protective power of this verbal armour is because of Sivasaktiyoga. The inner meaning of the poem is a prayer asking for such a soul-lifting and soul-enlightening protection.

15. प्रत्यक्षशिक्षणमिहाम्ब ! कृतं त्वयाऽभूत्
मच्छैशवे ललितभाषणमाद्यरूपम् ।
बाल्येऽपि तर्कबहुले श्रुतिरस्यगाथा–
बोधप्रबोधनमकारि परोक्षमेव ॥

अन्व :– हे अम्ब ! मच्छैशवे त्वया आद्यरूपं ललितभाषणं प्रत्यक्षशिक्षणं कृतं अभूत् । तर्कबहुले बाल्येऽपि श्रुतिरस्यगाथाबोधप्रबोधनं परोक्षमेव शिक्षणं त्वया अकारि ।

**नन्दिनी** :– शिक्षायां प्रथमं मातैव गुरुरिति शिक्षावल्ली प्रतिपादयति । मातृशिक्षायाः द्वैरूप्यमस्मिन् प्रकाश्यतेः – हे अम्ब ! मच्छैशवे =ममशिशुदशायां, आद्यरूपं=आद्यस्य शब्दब्रह्मणः शक्तियुक्तस्य (अभिधादियुक्तस्य) शिवशक्त्यात्मकस्येति यावत् । रूपं =ॐ काररूपं ॐॐॐ इत्यादि वर्णपदोच्चारणेन मात्रा प्रथमं शिशोः भाषा शिक्षणं क्रियते इत्यनुगन्तव्यम् । ललितभाषणं =सुकुमारसुन्दरमनोज्ञं, भाषणं=आलापनं काकलीकलसंभाषणमिति यावत् । प्रत्यक्षशिक्षणं– अक्षाणां = अन्तर्बहिरिन्द्रियाणां प्रति=प्रतिगतं विषयीकृतं, मननध्वननादितत्तदिन्द्रियक्रियारूपेण अनुभावनं प्रत्यक्षं शिक्षणम् । वस्तु दर्शयित्वा तन्नामादीनां शिक्षणं अभ्यासः यथाभवति तथा । त्वया = मात्रा, कृतं अभूत् =पूर्वमकारि । प्रथमतया "अर्थं बुद्ध्वा शब्दरचना" इति न्यायेन शब्दार्थज्ञानशिक्षणं सोदाहरणमेव कृतम् । तदा अहं ललितालापी समभवमिति भावः । बालानां वाचः स्वत एव मुग्धमनोहराः श्रोतॄणां परमानन्ददायिन्यः । तेषान्त्वादिभाषण– मनिर्वचनीयानन्ददायीति सकलविदितं सत्यमिति सारांशः । एवं प्रथमदशायां समाप्तायां, मयि संभाषणकुशले जाते, परिदृश्यमानेषु परिबोध्यमानेषु च विषयेषु , किं भवति ? केन भवति ? कथं भवति ? इत्याकारकाकांक्षातर्कबाहुल्ये, बाल्ये= बालभावे, श्रुतिरस्यगाथाबोधप्रबोधनं– श्रुतीनां =वेदानां अत्र पुराणेतिहासादयोऽपि ग्राह्याः , सर्वेषां श्रुतिमूलकतया तदुत्पन्नत्वात्। वेदपुराणेतिहासादिबोधितानामित्यर्थः । रस्यानां= मनोज्ञानां परतत्त्वज्ञानानन्ददायिनां, अत एव पुनः पुनः श्राव्यानामिति भावः । गाथानां =सुभषितत्वेन सर्वैः गीयमानानां प्रोच्यमानानां च कथानां, बोधप्रबोधनं बोधः = ज्ञानं, प्रबोधः=जागरणं, बोधप्रबोधनं= तत्त्वज्ञानजननेन अज्ञाननिद्रायाः जागरणमित्यर्थः । वस्तुनः वस्तुतत्त्वस्य च प्रकर्षेण समग्रतया अवगमनेन जागरणमिति भावः । परोक्षमेव =प्रत्यक्षादन्यविधयैव प्रतीयमानात्मना, अकारि =कृतं निरूढं भवत्या इति भावः ।

मात्रा प्रथमं पितरं दर्शयित्वा " एषः पिता " इत्यादि प्रत्यक्षेण शिशोः भाषाशिक्षणं

क्रियते । परं द्वितीयं तावत् वैदिकैतिहासिकपौराणिककाव्यनीतितत्त्वकथानां मनोज्ञतया वर्णनपूर्वकं कथनेन त्वया मात्रा परोक्षतया प्रतीयमानतयैव भाविगुरुशिक्षणाऽलभ्यं सर्वमपि मम बाल्ये सुशिक्षितमिति भावः । अनन्तरं गुरुप्रवचनकाले त्वच्छिक्षणालभ्यं सर्वमपि सुसंस्मर्यते – इत्यहो महत्ता मातुः दिव्यतमदेशिकतायाश्च इति सारार्थः । अनेन मातृतायाः सर्वसंपूर्णत्वं वेदादिविज्ञानसर्वस्वनिधानतयैव सुसंपन्नं भवतीति सुपर्यालोच्यम् । एवं च सुज्ञा विज्ञा प्राज्ञा च माता नित्यैव जगन्माता भवतीति भावः । एतादृशगुणसम्पत्तिः जगन्मातरमप्यनुगच्छतीति एषा स्तुतिः मातरमनुस्तुवन्ती पर्यन्ते जगन्मातृलीनां मातरमेव (जगन्मातरमेव)यातीति परमार्थः ।

**Nandini :-** अम्ब =O mother !, इह मच्छैशवे = during my infancy,त्वया =by you, आद्यरूपं ललितभाषणं =the very first soft words,प्रत्यक्षशिक्षणं कृतं अभूत् =you had made me learn them by the method of showing the object and then coordinating it with its name, तर्कबहुले बाल्ये =during my childhood full of whys, whats and hows, श्रुतिरस्यगाथाबोधप्रबोधनं परोक्षमेव अकारि =you gave me knowledge indirectly through stories and anecdotes, pleasing to the ear and which call for imagination.

The mother is the very first Teacher. We read in शिक्षावल्ली– 'मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव। अतिथिदवो भव ।' Her teaching falls into two methods: direct (through perception) and indirect, (through induction and deduction). The words ललितभाषणं and 'आद्यरूपं ' have special connotations: ललिता च ललितश्च ललितौ । तयोः भाषणं ललितभाषणं। The words taught are about the Divine Mother (ललिता देवी) delicate and subtle. आद्यरूपं आद्यस्य शब्दब्रह्मणः शक्तियुक्तस्य रूपं ॐकाररूपम् । You had made the root -sound in me to wake, rise up and boom by your orotund (visible lip-orientations) sounding (audible) pronunciation of ॐकार. In this method, both direct and indirect ways are comminged. But as time passed on, the worldly objects had invaded both my perception and imagination and made me forget all the wisdom that you so subtly had imparted to me. All the knowledge you gave me so lovingly was all lost now in this worldly wilderness into which I had ambled. O my mother !

Bestow on me now that soul-inspiring, uplifting wisdom-joy which banishes at once the multiobject-sense and shows the world in a different light.

16. तवाङ्गुल्यालम्बात्सुदृढपदविक्षेपसरणिं
तथा वागालापात्सुगतिमहमाशिक्षित इह ।
सुधागीतेर्मातर्निरुपमचिदानन्दलहरी–
परीवाहस्रोतोविहरणचणां तावककलाम् ॥

**अन्व** :– हे मातः इह तव अङ्गुल्यालम्बात् सुदृढपदविक्षेपसरणिं अहं आशिक्षितः आसम्। तथा वागालापात् सुगतिं आशिक्षितः आसम् । तव सुधागीतेः निरुपमचिदानन्दलहरी परीवाहस्रोतोविहरणचणां तावककलां आशिक्षितः आसम् ।

**नन्दिनी** :– हे मातः । इह =अस्मिन् जगति, तव, अङ्गुल्यालम्बात् =अङ्गुलीनामालंबनेन, सुदृढपदविक्षेपसरणिं =भूमौस्थिरतया पादाधानपद्धतिं , निश्चितार्थबोधनसमर्थानां सुप्तिङन्तानां पदानां विनियोगपद्धतिमित्यर्थान्तरं, अहं, आशिक्षितः आसम् । तथैव तव वागालापात् =वचस्संभाषणेन - एहि–याहि-खाद-क्रीड–पठ-धाव-इत्यादि एकतिङ्–वागालापात् सुगतिं=सुकुशलां गमनशक्तिं सन्मार्गं आत्मावबोधं च, तदन्यत्र सुगतेरभावात् ये गत्यर्थाः ते बुद्ध्यर्थाः इति न्यायात्, इत्यर्थान्तरम् । अहं आशिक्षितः संपूर्णतया अवबोधितः इति भावः। ततः हे मातः ! तव सुधागीतेः =अमृतगीतेः , निरुपमचिदानन्दलहरीपरीवाहस्रोतोविहरणचणां– निरुपमेषु= असदृशेषु, चिदानन्दस्य =आत्मज्ञानानन्दस्य, लहरीणां=तरङ्गाणां, परीवाहानां = जलोच्छ्वासानां, (जलोच्छ्वासः परीवाह इत्यमरः) स्रोतस्सु =प्रवाहेषु , विहरणे =विलासविचरणे, चणां= सुकुशालां, तावककलां =त्वदीयां षोडशीं कलां, आत्मस्वरूपां आनन्दमयीं विद्यां वा, अहमाशिक्षित इति यथा पूर्वम् । बाल्ये तावन्मातृगीत्या शिशोरानन्दनिद्रैकतानता प्रसिद्धैव । सैव जगन्मातृषोडशीकलाप्राप्त्यानन्दतयात्र सुव्यक्तेति रहस्यम् ।

**Nandini :-**मातः = O mother ! इह =in this world, तव अंगुल्यालम्बात् =taking your finger's prop सदृढपदविक्षेपसरणिम् =the way of planting the feet steadily on the ground [or , the way of using apt and grammatically sound words in making the meaning clear and to the point] तथा = in the same way: वागालापात् =by the torch of your words, ('तेजोमयीवाक् ' छान्दोग्य) =[by directing the child using words like 'come' 'go ' 'eat 'read', 'play' 'run' etc.] सुगतिम् =good gait, good behaviour; or the path followed by the good; or the ultimate soul-knowledge, आशिक्षितः= I was made to learn: ततः=afterwards, तव

सुधागीतेः=through your nectar - laden songs, निरुपम ...... चणां तावककलां आशिक्षितः आसम् =you who were adept in ambling nimbly on the crests of soul joy, had made me learn how to exprience your wisdom-joy.

O mother ! I have learnt not only to walk holding the prop of your fingers, but, with the aura of that divine, fear-banishing touch, I have learnt to plant my words aptly and adeptly also: With the light of your words, I have not only seen the right path to walk on. but the effulgence of soul- joy too. Your sweet lullabys have not only made me to step into the unconscious sleep known to all human beings, but also into the conscious sleep in which state I have learnt by your grace to ride on the crests of soul joy. The surest path to reach the "NadaBrahman" is song alone. It makes both the singer and the listener reach the Samadhi state. May I be blessed with such a song!

**17. त्वमेवाद्या शिक्षा प्रणवशिववल्ली मम मन –**
**स्समाधिक्षेत्रे संप्रविलस सुवर्णस्वरसुमा ।**
**महाविद्यासर्वस्वरसफलिनी मातरनिशं**
**यतस्त्वामाराध्यां प्रकटय इह स्वीयकवनैः ॥**

**अन्व** :– मातः प्रणवशिववल्ली त्वमेव आद्या शिक्षा असि । सा त्वं सुवर्णस्वरसुमा महाविद्यासर्वस्वरसफलिनी च सती मम मनस्समाधिक्षेत्रे संप्रविलस, यतः आराध्यां त्वां इह स्वीयकवनैः प्रकटये ।

**नन्दिनी** :– हे मातः, प्रणवशिववल्ली=प्रणवात्मकशिवाभिन्नस्य अस्मत्पितुः शिवलिङ्गार्यस्य, वल्ली=सर्वात्मना वलयित्री लता सती, त्वमेव, आद्या=मज्जीविते प्रथमा, वेदोपनिषत्संबन्धिनी च, शिक्षा=वर्णस्वरादीनामध्यापनरूपा तत्त्वविद्याप्रबोधनरूपा च, असि । प्रणवशिववल्ली=वलते इति वल्ली, (वल संवलने ) शिवं वलते इति शिववल्ली प्रणवाभिन्ना शिवल्लीति वा प्रणवाभिन्नं शिवं वलते इति वा समासः । प्रथमे प्रणवाभिन्नः शिवः (पिता) द्वितीये प्रणवाभिन्ना शिववल्ली मातेति विवेकः । आद्या =बालस्य पञ्चमवर्षे प्रवर्त्यमानसंस्काररूपा, वैदिकी तात्त्विकी च , वेदानां आद्यविद्यारूपत्वात् । शिक्षा=शिक्ष्यते वर्णादिः अनयेति शिक्षा। ( शिक्ष विद्योपादाने ) वर्णाद्युच्चारणलक्षणा। शिक्ष्यन्ते इति शिक्षाः =वर्णादयः । शिक्ष्यते ॐकारः आदिमवर्णः इति शिक्षा,आद्या शिक्षा = ॐ कारशिक्षणम् । ("ॐ कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ " इति वचनात् ) तथा च आद्या शिक्षा= ॐकाररूपिणी ब्राह्मीरूपिणी च । मातैव शिशोराद्यां प्रथमां वर्णशिक्षां "ॐॐॐ" इत्यादि स्वयमुच्चार्य शिशुमुच्चारयित्वा च ददातीति पूर्वपद्ये सुप्रतिपादितमेव।

वस्तुतो विचार्यमाणे सैषा प्राथमिकी ॐकारशिक्षा तात्त्विकी एव भवति । सच्चिदानन्दस्य शिशोः ज्ञाने (अनन्तनिर्विकारनिर्विषयस्य तस्य ज्ञानस्य अल्पाल्पमेव प्रापञ्चिकविषयविकारैः विच्छिन्नत्वात् अवच्छिन्नत्वात् परिमितत्वाच्च) ॐ इतिब्रह्मणः सुलभतयैव आत्मैक्यानुभूतिस्संपद्यते। परं तु यथा यथा च बालः उपचीयते तथा तथा तस्य अनन्तनिर्विकारनिर्विषयकं ज्ञानं अनन्तैः प्रापञ्चिकविषयैः सुबहुविषयकं सुबहुविकल्पकं च भवति । तदा ॐ इति ब्रह्मण आत्मानुभूतिरसंभवप्रायैवेति तात्त्विकं सत्यम् । पञ्चवर्षीयबालस्य यावद्भारतदेशं अक्षरस्वीकृति संस्कारः इदानीमपि संप्रवर्त्यते । तस्मिन्, सर्वत्र विशेषतः यावदान्ध्रप्रदेशं "ॐ नमः शिवाय" इत्येवं रूपेणैव संप्रवर्त्यते । तदेषा मातृरूपिणी आद्या शिक्षा प्रणवशिववल्ली-प्रणवं शिवं ॐ नमः शिवायेतिरूपेण वलयित्वा भवन्ती, पञ्चवर्षीयबालकेषु संप्रवर्त्यमाना, ॐ नमःशिवयेति षडक्षरी स्वरूपिण्येवेति अनाद्यनुगतं भारतीयमाद्याक्षरशिक्षासंप्रदायतत्त्वं "आद्या शिक्षा प्रणवशिववल्ली" इत्यनेन संप्रकाश्यते । एतादृशी प्रणवशिववल्ली हे मातः ! त्वमेव= उपरि निर्वर्णिता आद्या शिक्षा असि इति भावः । एतादृशी त्वं सुवर्णस्वरसुमा –सुवर्णः= शोभनवर्णः हिरण्यवर्णः अकारादिश्च, स्वरश्च =सुमधुरकण्ठनादः उदात्तादिस्वरश्च, एतौ उभौ, सुमानि=पुष्पाणि यस्यां सा । तादृशी सती, प्रणवशिववल्ल्यां प्रणवे अकारादीनां 'अ+उ+म्' इत्येतेषां वर्णानां स्वरस्य =बिन्दुनादात्मकस्य च स्थितिः संभाव्यते । सुवर्णस्य तैजसस्य, स्वरस्य=स्वेनैव राजतः (प्रकाशमानस्य) स्वयं प्रकाशस्य च (स्वेन राजत इति स्वरः इति व्युत्पत्तेः (गु. बा. प्र) अनयोरुभयोः स्थितिः शिवेऽपि च संभाव्यते । प्रणवशिवात्मस्वरूपारोपितायां शिववल्ल्यामपि सुवर्णसुमधुरभ्रमरनादस्वरसुमनस्संपन्नता (पुष्पसंपन्नताऽपि च) सुसंभाव्यते । शिक्षावल्ल्यां तु सूच्चरितस्वरादिप्रबोधकता सुसंपन्नैव । प्रस्तुतप्रणवशिववल्ली तु प्रणवशिवात्मिकेति विशेषः । अपि च आद्यशिक्षामतल्लिका माता प्रणवशिववल्ली संप्रवृत्ता । सा च प्रणवशिवपञ्चाक्षर्यात्मना सर्वज्ञं शिवं वलयित्वा तत्सर्वज्ञप्राप्तिसाधनतया सर्वकाम्यसाधनानि बीजमन्त्रवर्णस्वरपुष्पाणि विकासयतु इति भावः । तदनन्तरं, महाविद्यासर्वस्वरसफलिनी–महतीनां= शाक्तशैवादिपरमोत्कृष्टानां, विद्यानां=तत्त्वप्रतिबोधकशास्त्रादिविद्यानां सर्वस्वमेव= समस्तसारभूतमेव, रसः=आनन्दः, तेन फलिनी =फलवती फलतया प्रसवित्रीत्यर्थः। फलरूपेण महाविद्या =औपनिषदतत्त्वविद्या, तत्सर्वस्वफलदात्रीति भावः। तादृशी त्वं, मम मनस्समाधिक्षेत्रे– मनसः= चित्तस्य, समाधिरेव= सम्यगविचलिततया आधीयमानभूमौ आत्मनि, अनिशं=सदा संप्रविलस= सम्यगविरतमनन्यगोचरमात्मैकगोचरं यथा भवति तथा , विलस= वैशिष्ट्येन अनन्याकृष्यमाण– मनोज्ञरूपेण मदात्मैक्येन सायुज्यदायिनी भव, यतः= यस्मात्कारणात्, अहं, आराध्यां =सर्वाराधनीयां, त्वां, इह=अस्मिन्,लोके, स्वीयकवनैः =स्वकीयपद्यकविताभिः, प्रकटये = सुस्पष्टं समग्रं श्रोतृपठितृहृदयेषु प्रद्योतयितुमिच्छामीति भावः । प्रणवपञ्चाक्षर्यैव बालानामक्षरस्वीकार– संस्कारविषये निखिलतन्त्रस्वतन्त्रधर्मशास्त्रपारावारपारीणः श्री नारायणभट्टः स्वरचितधर्मप्रवृत्तिग्रन्थे–

पत्रिकायां (पट्टिकायां) सुवर्णस्य कृत्वा वित्तानुसारतः । सुवर्णलेखिनीकेन लिखेत्तत्राक्षराणि तु॥
ॐ नमश्शिवायेत्यादौ सिद्धं नमेत्यनुक्रमात् । अक्षराणि तु संपूज्य स्वयमुक्त्वाथ वाचयेत्॥
प्राङ्मुखोऽसौ समासीनः कुमारस्तानि लेखयेत् । पूजयित्वा तु गन्धाद्यैः पुनस्त्रिर्वाचयेदथ ॥
(बूरुगुत्यागरायशास्त्रिभिर्मुद्रितः (क्री .श. 1895) धर्मप्रवृत्तिग्रन्थः गर्भाधानादि पञ्च–दशसंस्कारप्रकरणे (16–17) अक्षरस्वीकारप्रकरणम् पुटे 107)

**Nandini :** प्रणवशिववल्ली मातः =O my mother ! creeper-like Thou embracest the Omkaratman (Thou art the auspicious creeper- like - string ever sounding the Omkara– the sound of the cosmic motor.) त्वमेव = you alone, आद्या शिक्षा =the tutor of all primary letters (शिक्ष विद्योपादाने), मम मनःसमाधिक्षेत्रे=In my mind-field of concentration सुवर्णस्वरसुमा=flowering with well -spelt and infallibly pronounced letter -incantations serving as the singing of bees, महाविद्यासर्वस्वरसफलिनी =full of fruits replete with the sweet juice of Self- Realization, संप्रविलस=shine clearly, यतः=if thou shinest thus, इह=in this world,स्वीयकवनैः=with my poems, आराध्यां त्वां प्रकटये =I will word-depict Thy worshippable Self.

"प्रणवपूर्वकमक्षरमारभेत ।" This is the age-old tradition in India. In Andhra Desa, it is customary to initiate the child into studies by शिवपञ्चाक्षरी "ॐ नमः शिवाय " This is echoed by the words "शिक्षाप्रणवशिववल्ली " This also brings to our mind the तैत्तिरीय शिक्षावल्ली "शीक्षां व्याख्यास्यामः । वर्णः स्वरः ।" As the mother initiates the child into the studies through the panchakshari, she, the first tutor, is described as प्रणवशिववल्ली. Such a creeper vibrating with the vitality of the primary sound is propitiated here to give birth to the all-desire- fulfilling flowers of seed-words and seed-sounds which later on fructify into the joy-juicy Self - Realization fruits. Inebriated with that joy-juice, I [the poet] will depict Thee as the All-worshippable in my songs, which are but thy blessings.

18. पयःपाने दृष्टौ, हसितललिते मे कलरुते
करग्राहे मुग्धे, मृदुलपदविन्यासकलने ।
कथालोकानन्दे, क्रमकुशलसंभावन (षण) विधौ
शिशुं मामाबाल्यं जननि ! शिवगे ! सुज्ञमकरोः ॥

**अन्व** :– शिवगे ! हे जननि ! मे पयःपाने, दृष्टौ, हसितललिते कलरुते, मुग्धे करग्राहे मुग्धे मृदुलपदविन्यासकलने, क्रमकुशलसंभावन(षण)विधौ, कथालोकानन्दे , शिशुं मां आबाल्यं सुज्ञं अकरोः ।

**नन्दिनी** :– शिवगे =शिवाभिन्नशिवलिङ्गार्यगामिनि ! हे जननि ! मे = मम पयःपाने =स्तन्यक्षीरपाने, मे इत्युत्तरत्र सर्वत्रान्वयः, दृष्टौ =नेत्राभ्यां दर्शने, हसितललिते =हसितेन ललिते =रम्ये, मे कलरुते =अव्यक्तमधुरशब्दे काकलीहसिते इति भावः । मुग्धे =सुकुमारसुन्दरे करग्राहे= करावलम्बने, मुग्धे=तथैव सुकुमारसुन्दरे, मृदुलपदविन्यासकलने= मृदुलतया पदक्षेपणस्याभ्यासे सुकुमारपदगत्यभ्यासे इति भावः । मृदुलतया = स्पष्टास्पष्टसुन्दरतया पदानां =प्रोच्यमानानां तिङ्सुबन्तचयानां, विन्यासकलने=वाक्यरूपेण अनुलापालापादिरूपेण सम्यक्कलनेऽपीति भावः । कथानां= कथितानामैतिहासिकादिपूर्ववृत्तानां, आलोकैः= विज्ञानद्योतकत्वात् प्रकाशैः कृते, आनन्दे =प्रमोदे, क्रमकुशलसंभावन (भाषणविधौ =क्रमेण कुशलं यथा संभावनविधौ=अभ्यूहनविधौ अथवा संभाषणविधौ =संभाषणारीतौ, आबाल्यं =बाल्यप्रभृति (बलति अल्पायासेन जीवनसमर्थो भवतीति बालः) तदीयं वयः बाल्यं तस्मादारभ्य शिशुं=अतिमात्रशयनशीलेन शिशुभूतं , प्रापञ्चिकज्ञानसमुपार्जनेऽनासक्तं, मां, सुज्ञं सुज्ञानिनं, अकरोः=व्यधाः । बाल्यप्रभृति पूर्वोक्तचेष्टासु स्वचेष्टाभिः मां सुज्ञानिनमकरोः येन अहं अज्ञचर्यदोषान् हित्वा सुज्ञानीवऽप्रावर्तयमिति भावः ।

**Nandini :-** शिवगे जननि ! =O my mother ! Thou who reachest and knowest Siva through and through, पयः पाने =while I was sucking thy milk, दृष्टौ =in looking at thee, मे हसितललिते =in my innocent joy-expressing smiles, कलरुते =in the inexpressible sweet sounds, मुग्धे करग्राहे =in my holding thee with my tender hands, मृदुलपदविन्यासकलने =in the first walking - attempts, laying my tender feet on the ground in a tottering manner, कथालोकानन्दे =in my joy born of your tickling narrations, (tickling me like light-beams), क्रमकुशलसंभावन(षण)विधौ =in the process of making me gradually imagine and talk diligently, शिशुं माम् =me, who is a sleepy ignoramus in the eyes of the world, आबाल्यं =during the childhood, सुज्ञं अकरोः=made me a knowledgeable person.

Thou hast given me suck, O my mother, and taught me the quintessence of desirelessness; while sucking thy milk, I have stationed thee in my eyes. As I, with time, forsaking the Soul-joy, have started running after the will-o'-the -wisp of worldly objects, and

as I have started despairing and weeping, having been not able to get those illusive things, Thou hast reminded me of my Real Joyous Self by making me burst into smiles time and again with thy tickling words and actions. First, thou hast held me with thy hands, and then made me hold thee, making me thus learn that a child has always to follow the teachings of its mother. Thou hast then made me walk, talk and behave (ललितपदविन्यास) in a goodly, sound and mannerly manner. Thou hast narrated various anecdotes of worldly wisdom and made me joyous. Thou hast made me learn the way and the angle in which to perceive the world in perspective and made me knowledgeable and skilful in communicating all this to others. Thus thou hast made my childhood beam with knowledge as in the case of a Prahlada or a Dhruva . All this skill has been now lost because of the onset of age. Show thyself to me now, O my mother, and renew my knowledgeableness.

**19. शिवज्योतिश्श्रीभिश्शिरसि, करयोरूरुतलयोः**
**शिवां रात्रिं यावत्परशिवगणार्चाविधिरहो ।**
**सुसम्पन्नः पित्रे जननि ! शिवयोगैकसुमन–**
**स्सपर्यामोदश्रीललितकलनं तं नु कलये ॥**

**अन्व** :– जननि ! त्वया पित्रे, शिवां रात्रिं यावत्, शिरसि, करयोः ऊरुतलयोः(समर्पिताभिः) शिवज्योतिश्रीभिः परशिवगणार्चाविधिः सुसम्पन्नः अहो ! तं शिवयोगैकसुमनस्सपर्यामोदश्रीललितकलनं नु अद्याऽपि कलये ।

**नन्दिनी** :– अत्र प्रतिवर्षं माघशुक्लप्रतिपदारभ्य महाशिवरात्रिपर्यन्तं अस्मत्पितृकृतः महाशिवरात्रिगणार्चाविधिः वर्णितः । हे जननि ! त्वया, पित्रे =अस्मत्पित्रर्थं त्वद्भर्त्रर्थमित्यर्थः। शिवां रात्रिं यावत् = माघशुक्लप्रतिपद्दिनादारभ्य महाशिवरात्रिदिनपर्यन्तं, तस्य=मम पितुः, तव भर्तुः, शिरसि =शिरोभागे, करयोः वामदक्षिणहस्तयोः, ऊरुतलयोः= उत्सङ्गद्वयेऽपि च, कांस्यपात्रेषु पञ्चाक्षर्यादियन्त्राकारेषु जलसिक्ततण्डुलपिष्टगोलिकानिर्मितज्योतिःपात्रिकासु सूक्ष्मडमरुकाकृतिषु घृतं निक्षिप्य संज्वलिताभिः, शिवज्योतिश्श्रीभिः=शिवाभिन्नज्योतिर्दीपिकाभिः, परशिवगणार्चाविधिः =महाशिवरात्रिगणार्चनस्य वेदागमकल्पोक्तविधानक्रमः, सुसम्पन्नः =सम्यक् भक्तिश्रद्धानन्दैः सुष्ठु यथाविधि यथावैभवं सम्पादितः । अहो ! = महाशिवरात्रिगणार्चनश्रद्धा उभयोः मन्मातापित्रोर्युवयोरिति भावः । तं =तादृशं महाशिवरात्रिगणर्चनोत्सवं, शिवयोगैक सुमनस्सपर्यामोदश्रीललितकलनं – शिवस्य =सदाशिवानन्यस्य शिवलिङ्गार्यस्य, योगैके =मुख्ये सायुज्ये, संलग्नं सुमनः= निर्मलं मनः, अत्र 'मनः', शब्दः वाक्कयानामुपलक्षकः । निर्मलत्रिकरणा–

नीत्यर्थः । तत्सहकृतायां सपर्यायां, आमोदस्य= आसमन्तात् प्रीतेः आनन्दस्येति यावत् । श्रियः= सम्पदः, ललितकलनं =सुन्दरसुकुमारसंभावनं, कलये = संभावये ।

महाशिवरात्रिगणार्चायां जलसिक्ततण्डुलपिष्टगोलिकानिर्मिताः सूक्ष्मडमरुकाकृतयः घृतज्योतिर्दीपिकाः वर्तुलेषु पात्रेषु (कांस्येषु) षडक्षर्यादियन्त्ररूपेण प्रस्तारिताः संप्रज्वाल्यन्ते। ततः शिवपूजासमये तेषु पात्रेषु 'ॐ' कारात्मकं शिरसि, "वा" कारात्मकं "यकारात्मकं च दक्षिणवामभुजयोः, "शि" कारात्मकं दक्षिणकरकमलेन हृदयसमीपे वामकरतलस्थप्राणलिङ्गस्य नीराजनतया, 'न' कारात्मकं 'मः' कारात्मकं च दक्षिणवामयोरूर्वोः च संस्थाप्य, **"ॐ कारवदना देवी, वा –य कारभुजद्वयी, "शि–कारदेहमध्या च, न – म कार पदद्वयी", पञ्चाक्षरी परा विद्या सतारालिङ्गरूपिणी शिवमन्त्राभिधा शैवी ममाङ्गे सुप्रतिष्ठतु"** ॥ इति पञ्चाक्षरी दीक्षोक्तप्रकारेण महाशिवरात्रिगणार्चायां आत्मलिङ्गज्योतिर्नीराजनं वेदमन्त्रैः क्रियते। एतादृश गणार्चानीराजनकरणेन शिवभावापन्नस्य अस्मत्पितुः, तन्नीराजनसंपादनानन्दैकतानचित्तायाः मातुः, उज्ज्वलज्योतिर्मयमहाशिवरात्रिगणार्चावैभवदर्शनेन आनन्दतन्मयानामस्मदादिद्रष्टृणां च दिव्यानन्दानूभूतयः स्मर्यमाणाः कविना पठितृश्रोतृभिर्भावुकैरनेन पद्येन अद्याप्यनुभाव्यन्ते ।

ज्योतिर्दीपिका –– सिक्ततण्डलपिष्टगोलिकानिर्मिता सूक्ष्मडमरुकाकारा च

अष्टदलपद्मम् –– ज्योतिर्यन्त्रपात्राणि .

पञ्चाक्षरीयन्त्रम् इत्यादीनि

**Nandini :-** जननि = Mother! पित्रे = for my father, शिवां रात्रिं यावत् = till Mahasivaratri, शिरसि = on the head , करयोः = in both the hands ऊरूतलयोः = on both the thigh -boards, शिवज्योतिःश्रीभिः = with the bright lights of the small rice-flour lamps, परशिवगणार्चाविधिः = the whole worship on the auspicious day of Mahasivaratri त्वया =by you , सुसंपन्नः = it is all made ready with sincerity, अद्य = to day , तं शिवयोगैकसुमनस्सपर्यामोदश्रीललितकलनं नु कलये = I recollect now the serene and beautiful joyous experience of Sivayogi ( my father ) whose heart and Soul are engrossed completely in the Divine service.

In this poem, the Ganarcha process performed by my father starting from the first day of Magha - month till the Mahasivaratri, has been described. Every day of this month , he used to fast throughout the day and perform Siva worship, Mahabhisheka etc., during the night. As the concluding rite, there used to be waving of lights ( to the pranalinga) arranged in small plates in which the lights are arranged in the shapes of the six letters of the Panchakshari, in the shape of the Panchakshari yantra, lotus and of Linga.

ॐकारवदना देवी वा—य—कारभुजद्वयी शि—कारदेहमध्या च ।
न—म—कारपदद्वयी पञ्चाक्षरी परा विद्या सतारा लिङ्गरूपिणी ॥

The Agama dictates the placement of the different letter - shaped light matrices thus: the ॐ - shaped light matrix is to be held on the head, the न- and म- shaped light matrices are to be held on the two thighs and वा- and य- shaped light matrices are to be held on either the shoulders or on the forehands. The nirajana of Pranalinga was used to be performed with all these lights. Afterwards, the worshipped Pranalinga held in the left hand was used to be brought to the heart - lotus and the Nirajana of Pranalinga was used to be performed with the aid of the शि - shaped light-matrix holding it in the right hand. These were used to be made in the form of small lamp- holders with rice -flour, and cotton-wicks drenched in ghee were placed in them to be lit. My mother used to prepare these letter - shaped lamp- holders (डमरुकाकार) and the lights as well with utmost sincerity and deep devotion. When this light-waving ceremony was being performed, not only my parents but all those who came to witness the worship used to feel ecstasy. The poet is here reminding himself ( and us too ) of that Divine Joy.

**20. नीतः पतिश्शिवसमुन्मदयोगयुक्तः**
**काशीपतिं कलितसुव्रतया त्वयैव ।**
**स्वस्थीकृतश्च नितरां हि शिवस्वयोगात्**
**सत्त्वोन्नतश्शिवपरः कृत एष वंशः ॥**

**अन्व** :– कलितसुव्रतया त्वया एव शिवसमुन्मदयोगयुक्तः पतिः काशीपतिं नीतः, शिवस्वयोगात् नितरां स्वस्थीकृतः, एष वंशः सर्वोन्नतः शिवपरश्च कृतः ।

**नन्दिनी** :– कलितसुव्रतया =कलितानि कृतानि शेभनानि व्रतानि यया, कृतानेकपुण्यव्रतयेत्यर्थः । त्वयैव, शिवसमुन्मदयोगयुक्तः= शिवसमुन्मदयोगेन =शिवैकतानोन्मत्तयोगेन युक्तः, पतिः =तव पतिः, अस्मत्पिता, काशीपतिं =काशीविश्वनाथं, नीतः=प्रापितः । ततः शिवस्वयोगात् = शिवात्मनश्च योगात्, शिवस्य = शिवलिङ्गार्यस्य विश्वनाथस्य च, स्वस्याः =शिवस्वशक्तिरूपायाः मम मातुः= विशालाक्ष्याःकाशी विशालाक्ष्याः अन्नपूर्णायाश्च, योगात् = अदृष्टयोगात् तत्तद् भावनायोगात्, नितरां =नितान्तं, स्वस्थीकृतः = यथार्थतयैहिकलोकसंसक्तश्च कृतः । तेन हि एषः वंशः= अस्माकं वंशः, सत्त्वोन्नतः=सात्त्विकबलोन्नतः, शिवपरश्च=शिव एव परः परमः

यस्य सः शिवे एवासक्तश्च कृतः । अन्यथा पितुः सांसारिकत्यागादस्मद्वंशोन्नतिरेव न स्यादिति भावः । दारापुत्रादीन्निराधारान्कृत्वा शिवैकतानोन्मत्तयोगः न मौक्षायेति, दारापुत्रादीन् सुशक्तसुधीसम्पन्नान् कुर्वत एव शिवैकतानमनोयोगस्थितिः मोक्षहेतुरिति मातृप्रबोध इति भावः ।

**Nandini :-**कलितसुव्रतया त्वयैव =By you, who performed all auspicious vratas, शिवसमुन्मदयोगयुक्तः पतिः=your husband, who entered into the frenzied state of Sivayoga, काशीपतिं नीतः= He was taken to Lord Viswanatha at Kasi शिवस्वयोगात् = through uniting himself with Siva नितरां स्वस्थीकृतश्च =he was made to establish himself in Atmabhava completely, (he was blessed to have the Atmabhava besides being in the jeevatmabhava) तस्मात् =because of this, एषः वंशः=this our family, सत्त्वोन्नतः शिवपरश्च कृतः =had been well established in serene state and was blessed to look to Siva as the Ultimate goal.

You, my mother ! performed many auspicious vratas. Your husband, with his feeling of oneness with Siva, entered into the frenzied state of Sivayoga. You then took him to Kasi and by making him serve Annapurna and Viswanatha, helped him in regaining his normal state. Thus you made him, as a kind of teaching to others, resume his service though steeped in the ecstatic state of Sivatmayoga. By this, our family could establish itself firmly in serenity and could make Sivabhavana as its Ultimate. If my Father were to become an ascetic, our family would not have spread at all.

Not only one has to have Sivabhavana but also has to make his wife and children powerful and wise along with it – this is the way to attain real emancipation. This lesson is made clear in this poem.

21. पुराऽन्त्ये मे लिङ्गार्चनविधिमशेषं विरचयन्
यथाशास्त्रं श्रौतैर्मनुभिरभिषिक्तैर्घनरसैः ।
सुतीर्थं दत्ते यस्सुत इति यदुक्तं तदिह ते
कनिष्ठेनानेनाचरितमिति धन्योऽस्मि जननि ! ॥

अन्व :– जननि ! अन्त्ये मे लिङ्गार्चनविधिं यथाशास्त्रं अशेषं विरचयन् यः श्रौतैः मनुभिः अभिषिक्तैः घनरसैः सुतीर्थं दत्ते सः सुतः इति पुरा (त्वया) यदुक्तं तद् इह ते अनेन। कनिष्ठेन (पुत्रेण) आचरितं इति अहं धन्यः अस्मि ।

**नन्दिनी** :– हे जननि ! अन्त्ये =प्राणावसानसमये, मे=मम, लिङ्गार्चनविधिं =प्रतिनित्यं क्रियमाणं प्राणलिङ्गार्चनविधिं, अशेषं= निःशेषं, यथाशास्त्रं= आगमशास्त्रोक्तं यथा तथा, विरचयन् = कारयन् (मत्प्रातिनिध्येन कुर्वन्वा) यः= यः सुतः, श्रौतैः=वैदिकैः, मनुभिः= पञ्चब्रह्ममन्त्रैः " सद्योजात'मित्यादिभिरिति यावत् । अभिषिक्तैः अभिषेचितैः घनरसैः= जलैः लिङ्गाभिषेकेन महामहिमोपेतैः तीर्थ'जलैः इति यावत् । सुतीर्थं दत्ते=सुकृतं मत्प्राणलिङ्गाभिषेकतीर्थं ददाति, सः सुतः=पुत्रः यथार्थपुत्रः इति –"तथ्यः पुत्रः कः" इति प्रासङ्गिक प्रश्ने पुरा यदुपर्युक्तमुक्तं त्वया, तत् पुत्रकृत्यं मया कनिष्ठेन इह त्वत्प्राणावसानसमये, अनुष्ठितं= आचरितं , अतोऽहं धन्योऽस्मीति कविर्धन्यंमन्यः, मातुः अन्तिमप्राणलिङ्गपूजा कनिष्ठेनैव कृता तदभिषेक तीर्थं-च मात्रे दत्तमिति भावः । आमरणं नित्यप्राणलिङ्गार्चाया अत्ययो माभूत् यद्यपि मरणमापद्येत, तर्हि तत्तु नित्यप्राणलिङ्गार्चानन्तरमेव संभूयादिति अस्मत्पितृणां सुदृढा भावना । पित्राप्यस्माकं नित्यशिवपूजाभोजनानन्तरमेव मत्समर्पितताम्बूलं स्वीकृत्य शिवैक्यं गतः । एषा तेषां सुदृढा शिवदीक्षा ।

**Nandini :-** जननि ! =O mother !, अन्त्ये =at the moment of death, मे लिङ्गार्चनविधिम् =the worship of my pranalinga, अशेषं यथाशास्त्रम् =completely and in accordance with the Agama sastra, विरचयन् =performing, श्रौतैर्मनुभिः=chanting the Vedic mantras(सद्योजातादि) अभिषिक्तैः घनरसैः=the potent waters with which the Pranalinga was bathed, सुतीर्थं यः दत्ते =whoever gives those holy waters to me, सः सुतः =he (alone) is my son, इति पुरा यदुक्तम् =what you had said earlier thus [as said above], इह=in this world, तद् +अनेन कनिष्ठेन +अनुष्ठितं =that word has been fulfilled by your youngest son (i.e. myself) इति अहं धन्यः अस्मि =thus, I have gathered the great fotune of fulfilling your heart's desire.

The firm resolve of my parents was that till the last breath was breathed, the worship of Pranalinga should continue, and if death had to come it should come only after the worship. I had the good fortune of dropping the holy waters which had bathed the pranalinga, into my mother's mouth at the moment of her death. My father also breathed his last after he performed his Siva Puja and had his meal. He merged himself into ParamaSiva after I had served him betel leaves. This shows surely their firm Siva Diksha.

22. यानि त्वया मयि शुभानि सुचिन्तितानि
योज्यानि तानि सदृढं खलु तेऽद्य मातः ।
सच्चित्सुखैकनिधिरूपतयैव, यस्मात्
मोक्षं प्रयामि शिवयोगमनन्ययोगम् ॥

अन्व :– मातः! त्वया मयि यानि शुभानि सुचिन्तितानि, तानि अद्य ते सच्चित्सुखै कनिधिरूपतयैव मयि सुदृढं योज्यानि , यस्मात् अहं अनन्ययोगं शिवयोगं मोक्षं प्रयामि।

**नन्दिनी** :– मातः ! त्वया, मयि =तव पुत्रे, यानि शुभानि =कार्याणि , सुचिन्ततानि= योजनीयतया सम्यक् चिन्तितानि =सङ्कल्पितानीति यावत् । तानि =शुभकार्याणि , ते =तव, सच्चित्सुखैकनिधिरूपतयैव=सत्यज्ञानानन्दनिधानरूपतयैव विद्वद्ज्ञानानन्दनिधानरुपतयैव वा, मयि, सुदृढं = गाढं स्थिरतया, योज्यानि =मयि योजनीयानि, त्वत्सङ्कल्पितसर्वशुभानां सद्विद्वद् ज्ञानानन्दनिधानरूपेणैव मयि निक्षेपः कार्यः इति भावः । यस्मात् =यन्निधानात्, अनन्ययोगं =एकैकयोगं , शिवयोगं=शिवसायुज्यरूपं मोक्षं, प्रयामि, गच्छामि । मह्यं देयतया चिन्तितानि सुखानि मोक्षसुखाभिन्नशिवयोगरुपेणैव देयानीति कवेरभिलाषा प्रकाशिता इति भावः ।

**Nandini :-** मातः= O mother !, त्वया मयि यानि शुभानि सुचिन्तितानि तानि =those auspicious things that you had thought out with regard to me, अद्य =now, ते =your, सच्चिद्+सुखैकनिधिरूपतया एव=in the form of the treasure of Satchidananda, मयि =in me, सुदृढं=firmly, योज्यानि खलु =may please be yoked (to me), यतः अनन्ययोगं शिवयोगं मोक्षं प्रयामि =in such a way that I be conducted towards the emancipation from all worldly bonds–the highest and unique Sivayoga.

O mother ! May every type of well - being that you wish to bestow on me be channelled to lead me to the unending treasure of soul - joy. I pray you to make all the physical pleasures that you grant me conduct me towards emancipation from all wordly bonds i.e. towards the highest and unique Sivayoga. Let not any worldy pleasures make me fall down to the abysmal depths. Lead me from the physical bondage to eternal freedom.

23. त्वमेवैका मातः शिशुकमखिलाऽज्ञं सुमनसा
समाज्ञायाऽश्लिष्य स्फटिकविमलं चिद्रसभरम्।
पयोभिश्चेष्टाभिर्मृदुलकलवाग्गीतिभिरहो
मनोज्ञं लोकज्ञं तदनु सकलज्ञं प्रकुरुषे ॥

**अन्व** :— मातः ! त्वमेवैका अखिलाऽज्ञं स्फटिकविमलं चिद्रसभरं शिशुकं सुमनसा समाज्ञाय, आश्लिष्य, तव पयोभिः चेष्टाभिः मृदुलकलवाग्गीतिभिः मनोज्ञं लोकज्ञं तदनु सकलज्ञं च प्रकुरुषे इति अहो ।

**नन्दिनी** :— हे मातः ! त्वमेकैव =जगति त्वमेकैव, अखिलाऽज्ञं= न ज्ञः अज्ञः, अखिलस्य अज्ञः=अखिलाऽज्ञः, ज्ञानशून्य इति सामान्यशिशुपक्षे, नास्तिज्ञः यस्मात्सः अज्ञः संपूर्णः ज्ञानातीतः इत्यर्थः। अखिलश्चासावज्ञश्च अखिलाज्ञः तं सर्वात्मकं सर्वातीतज्ञानिनमित्यर्थः । इहलोके ज्ञानेन्द्रयादिभिः शिशोरखण्डज्ञानस्य तत्तद्विषयवृत्तिरूपेण परिच्छिद्यमानत्वात् इति तात्त्विकशिशुपुक्षे । स्फटिकविमलं=स्फटिकमिवनिर्मलं उभयशिशुपक्षयोः समानम् । चिद्रसभरं =ज्ञानानन्दरसपूर्णं एतदप्युभयत्र समानम् । शिशोरत्यर्थं शयनशीलत्वात् (अत्यर्थं शेते इति शिशु :(शीङ्स्वप्ने) शयनस्य आत्मानन्दसमाध्यंशत्वात् च, शिशुकं=स्तनंधयदशास्थितमित्यर्थः। सुमनसा=सुतीक्ष्णतया सूक्ष्मदर्शनसमर्थेन मनसा इत्यर्थः । समाज्ञाय=सम्यगासमन्तात् ज्ञात्वा, शिशुतत्वं शिशोरावश्यकं कर्तव्यं चेत्यर्थः । पयोभिः=तवस्तन्यक्षीरैः, चेष्टाभिः= भाषादिविज्ञानदायिभिः कायिकमौखिकाभिनयरूपक्रियाभिः, मृदुलकलवाग्गीतिभिः =मृदुभिः अव्यक्तमधुराभिः वाग्रूपगीतिभिः गीतिरूपवाग्भिर्वा, तं =शिशुकं, मनोज्ञं =संदृष्टजनमनोविज्ञानिनं सुन्दरमित्यर्थश्च। तत्क्रमेण लोकज्ञं =लोक्यते सर्वमस्मिन्निति लोकः जगत्, लोक्यते आलोक्यते इति लोकः, स्वर्गादिलोको वा जनश्च। " जगतीलोको विष्टपं भुवनं जगत् , लोकस्तु भुवने जने" अम. 'लोकृ' दर्शने तादृशं लोकं जानातीति लोकज्ञः तं जगज्जनविज्ञानिनमित्यर्थः । तदनु =तदनुपदमेव, सकलज्ञं= सकल लौकिककलाज्ञानिनं, कलाभिस्सह वर्तत इति सकला परमेश्वरी सकलश्च परमेश्वरश्च, तां तं च जानातीति सकलज्ञः, तं सर्वज्ञामीश्वरीं सर्वज्ञं परमेश्वरमित्यप्यर्थः। प्रकुरुषे =प्रकर्षेण सकलपारम्यप्रकर्षतया त्वं मां करोषीति भावः । इति अहो आश्चर्यमर्यम्।

**Nandini :-** मातः= O mother ! जगति =in the world, त्वं एका एव =you alone, अखिलाज्ञं=completely ignorant [in the case of an infant, "नास्ति ज्ञः यस्मात् सः" there is no other who is wiser than the infant], स्फटिकविमलं =clear like the crystal, चिद्रसभरं =filled from top to toe with wisdom-joy, शिशुकं =the little infant, सुमनसा=with a mind replete with love, समाज्ञाय=understanding full well the whatness of childhood, आश्लिष्य=having embraced, पयोभिः=with breast-milk, चेष्टाभिः=with physical, oral and gestural actions, मृदुलकलवाग्गीतिभिः=with soft and sweet words and songs, तं= that little child, मनोज्ञं = as attracting every seer's attention, तदनु= in the wake of it, सकलज्ञं = as the knower of all worldly objects, प्रकुरुषे = You make it into a great

being in the world, and also into a yogi spiritually.

You alone know, my Mother ! the psychology of the ignorant (in respect to the worldly sphere) child–therefore, though it cannot spell out what it wants, you give it with love what it requires, using your subtle mental abilities. You also understand, being the personifiction of the Divine Mother, its unbiased wise state : 'अखिलाज्ञम्' this word is derivable in two ways (i) अखिल+अज्ञम् this pertains to the worldly ignorant child (ii) "नास्ति ज्ञः यस्मात् सः । अखिलश्चासावज्ञश्च अखिलाज्ञः" there is no other, who is wiser than the child. The child reflects like the crystal all the worldly things – it repeats whatever is uttered; it learns whatever it is made to learn. The crystal assumes the colour of the object which is kept near it. The child includes all into its play, and enjoys. It engrosses itself in play ('बालस्तावत् क्रीडासक्तः'). Understanding its wise and joyous state, the mother hugs it time and again. With her sweet words and songs, she makes it into an attractive entity, into a well–behaved intelligent being who can understand the various mentalities of different people. Ultimately, she makes the child grasp the ultimate. ('सकलज्ञम्' –'कलाभिः सह वर्तत इति सकलः, सकला च सकलश्च, सकलौ परमेश्वरीपरमेश्वरौ, तौ जानाति इति सकलज्ञः, तं सकलज्ञम् । Parameswara and Parameswari are consummate beings. One who knows these all–perfect, complete beings is सकलज्ञ).

But as time passes, all this wisdom showered by the loving mother, gets covered up by the worldly impressions. O mother ! lift me up from this mind - bogging delusion.

24. कुतोऽहं ? को वाऽहं ? किमिति तव गर्भे सुफलितः ?
शरत्षट्कं यावत् किग्वि च कृतं ? मातरमले ।
न जाने त्वं ह्येव स्वयमविरलं चित्प्रसरणैः
स्वसच्चिद्रूपं प्राकटय इति मन्ये फलतया ॥

अन्व :– हे अमले ! मातः अहं कुतः आगतः ? अहं कः वा आसं अस्मि भविष्यामि च? ततः अहं तव गर्भे किमिति सुफलितः ? शरत्षट्कं यावत् किमिव मयाकृतं ? एतत्सर्वमहं न जाने ! अपि तु त्वं एव स्वयं, अविरलं, चित्प्रसरणैः स्वसच्चिद्रूपं फलतया प्राकटयः इति मन्ये।

नन्दिनी :– अमले = निर्मले हे मातः । अहं कुतः= कस्मात्प्रदेशात् आगतः कस्यसम्बन्धी इत्यर्थः । अहंकोवा=कीदृशजातिगुणक्रियासंज्ञासंख्याद्रव्यादिविशेषविशिष्टः पूर्वमासं ? वर्तमानः अस्मि ? भविष्ये च भविष्यामि ? इत्यर्थः । तव गर्भे= गर्भकोशे, किमिति =किमर्थं कीदृशं प्रयोजनमुद्दिश्य, सुफलितः =सुपरिपक्कीभूतः, अजनिषि, प्रादुरभूवमितियावत् । शरत्षट्कं यावत् =षड्वर्षवयःपर्यन्तं , किमिव च कृतं =किं कर्म कृतमिव कृतसदृशं दृश्यते , इति =इत्यपि, न जाने =न जानामि अज्ञानात् दुरधिगमत्वाच्च न जानामीति भावः । परं तु त्वं एव स्वयं =साक्षात्स्वयमेव, अविरतं = सदा, चित्प्रसरणैः= ज्ञानचैतन्यप्रसरणैः, स्वसच्चिद्रूपं= स्वस्य सत्यज्ञान (आनन्द) स्वरूपं, प्राकटयः= तस्मिन् षड्वर्षपर्यन्तकाले मयीत्यध्याहारः । त्वं प्राकाशयः, इति हि, मन्ये =संभावये । अन्यथा ज्ञाननिर्वर्त्यजीवनप्रगतिः कथं संभविता ? चित्स्वरूपिण्यास्तव आत्मीयज्ञानावलम्बनेनैव कोऽहमित्यादिविधया असंविज्ञातोऽपि स्वयंपरिवर्धितस्त्वयेति भावः ।

वस्तुतस्तु बालस्तावत् चिद्घनस्वरूपः । इन्द्रियषट्कद्वारा सुप्रसृतं ज्ञानं ज्ञेयविषयाकारितं परिच्छिन्नं भवति । यथा च तटाककुल्याप्रसृतस्य वर्षप्रसृतस्यवा महाजलस्य तत्तत्क्षेत्रकुल्याद्याकाराकारितं परिच्छन्नं रूपं भवति, तथैव बालः स्वमातुः जननात्प्रागेव तदीयचित्प्रसरणेन घनानन्तचिन्मयो भवति । ततश्च क्रमशः ज्ञानेन्द्रियद्वारा लौकिकप्रत्यक्षीकरणादिभिः तत्तत्परिच्छिन्नलौकिकज्ञानवान् भवति । अपरिच्छिन्नालौकिका चित् परिच्छिन्नलौकिकचिद्वृत्तिषु संमिश्रीभूत्वा संव्याप्ता भवति । महाकाशः घटाद्याकाशेष्विव इति भावः। तदेवं हे मातः ! षड् वर्ष-वयःपरिमितं मदीयं ज्ञानं त्वत् (चित्) प्रसृतं निरवधिकं ज्ञानमेव । परं तु तत् स्पष्टतया घटाकाशेन परिच्छिन्नविविक्तेन महाकाशमिव अनन्तं ज्ञानं नैवावगम्यते। अनन्तमविच्छिन्नं ज्ञानं आकाशं वा क्रमशः विच्छिन्नं विविक्तविषयं च भवतः इति तत्त्वम् ।

**Nandini :-** अमले मातः=O holy mother ! अहं कुतः= wherefrom have I come?,अहं को वा =who am I now and before this incarnation?, तव गर्भे किमिति सुफलितः=why am I born, as a ripe fruit, from your womb? शरत् षट्कं यावत् किमिव कृतं च =what has been done by me up to my first six years ? इति न जाने =all these I do not know, त्वमेव स्वयं =you yourself, अविरलं =uninterruptedly,चित् प्रसरणैः=by directing into me the perennial flows of your wisdom, स्वसच्चिद्रूपम् =your form which is a conglomeration of truth, knowledge and consciousness, प्राकटयः इति फलतया मन्ये =I think, on the basis of the progress of my life, that you had uninterruptedly expressed through me till I was six years old.

I do not remember what I did and what I was prior to my sixth year. From my sixth year onwards, I am able to recollect properly. For this to be possible, there should have been knowledge even prior to my sixth year. This knowledge and consciousness are all due to the perennial flow of your consciousness through me. The unlimited, pure and unruffled joy of Being felt and found in childhood, is oftentimes made limited, impure and ruffled through worldly contact. The child's knowledge is like a great lake – the water flowing out of it will take the shape of the field into which it flows. But it is not the true shape of the water. In the same way, the unlimited knowledge of the child, later on, acquiring the shapes of the world objects, becomes bogged up. Therefore the meaning is that upto six years our true form is not worldly but that of the mother's divine joy.

**25. नमस्ते पादाभ्यां पतिगतिरताभ्यां शिवपथे**
**मनोज्ञैर्मञ्जीरैर्हृतशिशुमनस्कैरनुपदम् ।**
**ललद्विन्यासाभ्यां नतसुतशिवाभ्यां निखिलचि–**
**न्निधानाभ्यां भूयस्सुकृतसुफलाभ्यां जननि ! मे ॥**

**अन्वय** :– हे मे जननि ! शिवपथे, पतिगतिरताभ्यां अनुपदं हृतशिशुमनस्कैः मनोज्ञैः मञ्जीरैः ललद्विन्यासाभ्यां नतसुतशिवाभ्यां भूयस्सुकृतसुफलाभ्यां ते पादाभ्यां नमः अस्तु ।

**नन्दिनी** :– मे जननि ! शिवपथे =मङ्गलमार्गे शैवमार्गे, पतिगतिरताभ्यां =भर्तृगत्यासक्ताभ्यां, पतिगत्यनुगामिभ्यां पतिभावानुगमिभ्यामिति चार्थः । अनुपदं= प्रतिपदमनुसृत्य, हृतशिशुमनस्कैः = आकृष्टशिशुमनस्कैः, मनोज्ञैः =मनोहरैः, मञ्जीरैः = नूपुरैः, ललद्विन्यासाभ्यां =लालित्येन ललन्तः विन्यासाः = पदविक्षेपाः याभ्यां ताभ्यां , नतसुतशिवाभ्यां =नतेभ्यः सुतेभ्यः, शिवाभ्यां=सुमङ्गलाभ्यां, निखिलचिन्निधानाभ्यां= निखिलायास्समस्तायाः, निर्गतं खिलं यस्यास्सा खिलभागशून्यायाः संपूर्णायाः अपरिच्छिन्नाया इत्यर्थः । चितः =तत्वज्ञानस्य, निधानाभ्यां= अक्षयाऽवासाभ्यामितियावत् । भूयस्सुकृतसुफलाभ्यां =भूयसां सुकृतानां सर्वशोभनकार्याणां पुण्यानामितियावत् । सुफलाभ्यां =सर्वशोभनफलस्वरूपाभ्यां अनन्तपुण्यफलतयैव मातृचरणोपलब्धिः नाऽन्यथेति भावः । ते =तव, पादाभ्यां= चरणाभ्यां, नमः= प्रणामः अस्तु सर्वकामवशीभावेन सर्वकामातीतस्थितिप्राप्तिसंभावनासंसिद्धिरस्तु इति भावः ।

अत्र पतिगतिरतत्वं पतिबुद्ध्यनुगामित्वं च सुप्रजा (सन्तान) प्राप्तिहेतुभूतम् । अत एव मातृपदमञ्जीररवाः शिशुमनांस्येव हरन्तीति विशेषः । इतः पूर्वं मातृपदमञ्जीररवाः हृतपतिमन

स्का एवासन् । इदानीं ते एव हृतशिशुमनस्का अपि संजाताः इति भावः – मातृसंवित्प्रवर्तमानानां शिशूनां मातृपदमञ्जीररवस्य अनुज्ञानातिशयो द्योतितः । अत एव मातृ पदमञ्जीररवाः चिद्रूपास्सन्तः मातृपदे चिन्निधाने कुर्वन्तीति, ततश्च मातृचरणौ नतसुतेभ्यः शिवौ = मङ्गलरूपिणौ पार्वती परमेश्वररूपिणौ च भवतः इति च भावः । इत्येतत्सर्वं अस्माकं बहुसुकृतस्य सुरुचिरं फलमिति भावः ।

**Nandini :-** मे जननि ! = O my mother ! शिवपथे = in the auspicious Saivamarga पतिगतिरताभ्याम् = ever pleased to go along the path taken by your husband अनुपदम् = at every step हृतशिशुमनस्कैः मनोज्ञैः मंजीरैः ललद्विन्यासाभ्याम् = Every step of which is made attractive to your children's hearts by the sweet jingling of your anklets. नतसुतशिवाभ्याम् = raining blessings on your children bowing to you निखिलचिन्निधानाभ्याम् = Indestructible abodes of unlimited pure consciousness भूयः सुकृतसुफलाभ्यां = bestowing plenteous fruits of virtues ते पादाभ्यां नमः = I bow to your lotus feet.

O my mother ! Being a consistent follower of Siva, you are all–auspicious for your children who bow and follow you. Being a repository of Sivajnana, you make us also such. Going along the Sivapatha, you attract your children towards the same through the tinklings of your anklets. I bow to your feet to lead me to the soul-joy that is past desire, past care and past impressions. The tinklings of the anklets are here announcing that the Divine Mother's feet are repositories of wisdom.

**26. विशालाक्षीमातस्तव पदनखोद्भूतकिरणाः**
**प्रवालाभा नित्यं विदधतु भवत्सन्निधिसुखम् ।**
**रविस्संध्यास्वेषामपरिमितरक्त्यै निजतनुं**
**निशि प्रोत्ताप्यापि ह्यलभत मनाग्रागमुदये ॥**

**अन्वः**:– विशालाक्षीमातः तवपदनखोद्भूतकिरणाः प्रवालाभाः सन्तः नित्यं भवत्सन्निधिसुखं विदधतु । एषां अपरिमितरक्त्यै रविः निजतनुं संध्यासु निशि प्रोताप्यापि उदये मनाग् रागं अलभत ।

**नन्दिनी** :– विशालाक्षीमातः ! तव पदनखोद्भूतकिरणाः=पदनखेभ्यः प्रादुर्भूताः किरणाः, प्रवालाभास्सन्तः=प्रवालप्रभावन्तस्सन्तः, नित्यं =शाश्वतं , भवत्सन्निधिसुखं–भवत्सन्निधेः=त्वत्

सामीप्यस्य, सुखं,विदधतु=कुर्वन्तु , एषां=एतादृशत्वत्पदनखा अपरमितरक्त्यै=अमितारुण्यार्थं, अमितानन्दानुग्रहायच, रविः=सूर्यः, निजतनुं=स्वात्मानं स्वदेहं च , संध्यासु=सायंसंध्याग्निषु, निशि=रात्रियावत् , प्रोत्ताप्यापि= प्रकर्षेण संध्याग्नौ उत्ताप्यापि= उच्चैः तपसा तापयित्वाऽपि, उदये=केवलं प्रातरुदयकाले , सूर्यः, मनाक् रागं= स्वल्पमेवारुणिमानं अनुग्रहं च , अलभत = आप्नोत्, उदितसूर्यकिरणारुण्यं त्वत्पादनखारुण्यस्य शतसहस्रांशमेवेति भावः ।

**Nandini :-** विशालाक्षीमातः = O my mother, Visalakshi!, तव = your पदनखोद्भूतकिरणाः = the light - red rays emanating from the nails of your feet. प्रवालाभाः सन्तः = having the likeness of Corals, नित्यं = Always, भवत्सन्निधिसुखं विदधतु = May they bestow on us the happiness of your presence एषां अपरिमितरक्त्यै = for acquiring that delicate redness(grace– raining love ) of your feet रविः = the sun, सन्ध्यासु = in the red fires of the evening twilights निशि = throughout the night, निजतनुं = his body प्रोत्ताप्य अपि = even after having exposed it to glowing fire ( like iron in fire ) उदये = in the morning मनाक् + रागं अलभत हि = could get only a little redness ( Could receive only a little of the grace- raining love)

The sun, for getting your grace, is performing penance every night from times immemorial. He scorches himself in the furnace of the evening twilight daily to attain the delicate redness of your feet ( your loving grace ). Having scorched himself in the smith– fire of twilight and doing penance throughout the night, he daily rises to test whether he has attained that delicate redness of thy feet - nails. But alas! He has yet to get it. 'किरणः'– किरति विक्षिपति तमः ( कृ विक्षेपे) – with this etymology, we get the special meaning that the rays emanating from the Divine Mother's feet-nails, are capable of dispersing the darkness of ignorance.

प्रवालाभाः प्रवलते संचलति चैतन्येन ( वल संचलने) i.e. those rays have the form of the light of consciousness – as in a tender leaf or in a coral.

रविः– रवते गच्छतीति रविः (रूङ् गतौ) i.e. the Sun is one who strives indefatigably to attain the Grace of the Divine Mother.

By the explanations given to these three words, we come to know that the nails of the Divine Mother's feet are not only ca-

pable of dispelling the darkness of ignorance but ever bestow on us the light of consciousness and wisdom also, and that one has to strive without break like the Sun to attain Her Grace. The sun with his incessant efforts from times immemorial, has yet to touch the hem of the delicate redness of her feet - nails. But he is enlightening the whole world with this minute share of Her Grace. From this, one may try to estimate the brightness of the light emanating from those feet - nails. May those rays, O my mother, dispel the darkness of my ignorance and fill me with the scintillating light of your consciousness.

27. मातस्त्वदीयपदपङ्कजरेणुरक्तैः
कारुण्यसान्द्रमधुभिस्तव पन्नखाग्राः ।
सेवानतेऽस्य दुरदृष्टलिपिं प्रमृज्य
माधुर्यधुर्यकवितां विलिखन्तु फाले ॥

अन्व :– मातः तव पन्नखाग्राः, त्वदीयपदपङ्कजरेणुरक्तैः कारुण्यसान्द्रमधुभिः सेवानते अस्य फाले दुरदृष्टलिपिं प्रमृज्य माधुर्यधुर्यकवितां विलिखन्तु ।

**नन्दिनी** :– मातः! तव पन्नखाग्राः–पदोः=चरणयोः, नखाग्राः=अग्रनखाः, त्वदीयपदपङ्कजरेणुरक्तैः–त्वदीययोः, पदपङ्कजयोः =पादपद्मयोः, रेणुभिः = धूलिकणैः, रक्तैः=लोहितैः, अनुरागपूर्णैश्च, कारुण्यसान्द्रमधुभिः =कारुण्याभिन्नैः, सान्द्रैः=स्निग्धैः, मधुभिः= मृद्वीकारसैः, सेवाऽऽनते=सेवार्थमानते , अस्य =मम, फाले =फालभागे , दुरदृष्टलिपिं =दुरदृष्टसूचिकां स्रष्ट्रा लिखितामपि, लिपिं=लिखिताक्षरविन्यासं, प्रमृज्य=निर्वाप्य, ब्रह्मलिखितलिपेरपि प्रामर्जनसामर्थ्यं भक्ताभीष्टसल्लिपिलेखनसामर्थ्यं च मातृपदनखानामस्तीति भावः । माधुर्येण धुर्यां =संभृतां भारवतीं, कवितां=कवनशक्तिं तन्निष्पन्नामित्यर्थः । विलिखन्तु=विशेषेण त्वदेकरसवैशिष्ट्यपूर्णतया लिखन्तु । त्वदेकरसरस्यकवनशक्तिमनुगृह्णन्त्विति भावः ।

**Nandini :-**मातः = O my mother ! , तव पन्नखाग्राः = The nails of your feet, त्वदीयपदपङ्कजरेणुरक्तैः = dyed with the pollen- dust of your lotus feet, कारुण्यसान्द्रमधुभिः =wetted by the honey of your abundant mercy, सेवानते अस्य फाले =On this man's brow ( i.e. the poet's) which touches your feet in the act of bowing, दुरदृष्टलिपिम् = the ill-fated writing written by Brahma, प्रमृज्य= erasing it, माधुर्यधुर्यकवितां विलिखन्तु= May they write as my share on my brow, the power of writing mellifluous poems.

The nails of the DivineMother's feet have the power of obliterating the ill - fated writings of Brahma. By bowing at her feet, one can not only get rid of unpleasantness but become blessed with pleasing and desirable boons. Her lotus -feet have loving redness and merciful honey. Using her nails as writing pens, may she overrwrite on my brow as on a magnetic tape, the capability of writing honey-oozing poems so that the ill-fated scribblings of Brahma get erased by themselves.

**28. गास्यामि तेऽम्ब ! निगमागमसंस्तुतार्यं**
**व्यासीभवंश्चरितमार्द्रहृदम्बुजातः ।**
**व्यालेखिताऽस्मि जनहृत्फलकेऽपि च त्वां**
**तेजोमयीं कवितया करुणा भवेत्ते ॥**

**अन्वय :–** अम्ब ! ते करुणा भवेद्यदि, अहं आर्द्रहृदम्बुजातः व्यासीभवन् निगमागमसंस्तुतार्यं ते चरितं व्यालेखिताऽस्मि । जनहृत्फलकेऽपि च तेजोमयीं त्वां कवितया व्यालेखिताऽस्मि ।

**नन्दिनी :–** अम्ब ! ते करुणा भवेद्यदि= तवानुग्रहो यदि भवेदित्यर्थः । आर्द्रहृदम्बुजातः =स्वात्मभावनया मात्रात्मभावनया च तदेकरसार्द्रहृदयं अम्बुजातमिव यस्य सः । ततः व्यासीभवन् = अव्यासः व्यास इव सम्पद्यमानीकृतः सन् पाराशर्यवचस्संपन्नस्सन्नित्यर्थः । निगमागमसंस्तुतार्यं– निगमाः=वेदाः, आगमाः=देवपूजाविध्यादि (मन्त्रयन्त्रोपासनाक्रमदेवालयविग्रहादि– प्रतिष्ठावास्तुशिल्पनृत्यगानपाकादि) बोधकशास्त्राणि – "आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ मतं च वासुदेवस्य तस्मादागममुच्यते " तैः वेदशास्त्रादिभिः, संस्तुतं=सम्यक् प्रकाशतया प्रकीर्तितगुणातिशयवत् सम्यक् परिचितमित्यर्थः । आर्यं च = सर्वोत्तमं कुलीनं ( 'ऋ' गतौ) गन्तुं योग्यं आश्रययोग्यं शरण्यतया गम्यमित्यर्थः । भक्त्या बुद्ध्या च गम्यमिति भावः। संस्तुतं च आर्यं चेति उभयविशेषणकर्मधारयः । तादृशं ते चरितं = आचरितं वृत्तमिति यावत् । गास्यामि । अपि च = अतःपरं, तेजोमयीं= तेजोरूपिणीं त्वां , जनहृत्फलकेऽपि च =जनानां हृदयफलकेऽपि च , व्यालेखितास्मि=विशिष्टतया विशालतया वा संपूर्णतया, लिखिष्यामि चित्रीकरिष्यामि इति भावः ।

**Nandini :-** अम्ब! = O mother ! ते करुणा भवेद्यदि = If you condescend to show mercy on me, आर्द्रहृदम्बुजातः = I, with my lotus- heart full with devotion towards you ( drenched with the joy of knowledge born of seeing you as my own self and as my mother's self ), व्यासीभवन् = assuming the form of Vyasa ( blessed with his word–

pable of dispelling the darkness of ignorance but ever bestow on us the light of consciousness and wisdom also, and that one has to strive without break like the Sun to attain Her Grace. The sun with his incessant efforts from times immemorial, has yet to touch the hem of the delicate redness of her feet - nails. But he is enlightening the whole world with this minute share of Her Grace. From this, one may try to estimate the brightness of the light emanating from those feet - nails. May those rays, O my mother, dispel the darkness of my ignorance and fill me with the scintillating light of your consciousness.

27. **मातस्त्वदीयपदपङ्कजरेणुरक्तैः**
**कारुण्यसान्द्रमधुभिस्तव पन्नखाग्राः ।**
**सेवानतेऽस्य दुरदृष्टलिपिं प्रमृज्य**
**माधुर्यधुर्यकवितां विलिखन्तु फाले ॥**

अन्व :– मातः तव पन्नखाग्राः, त्वदीयपदपङ्कजरेणुरक्तैः कारुण्यसान्द्रमधुभिः सेवानते अस्य फाले दुरदृष्टलिपिं प्रमृज्य माधुर्यधुर्यकवितां विलिखन्तु ।

**नन्दिनी** :– मातः! तव पन्नखाग्राः–पदोः=चरणयोः, नखाग्राः=अग्रनखाः, त्वदीयपदपङ्कजरेणुरक्तैः–त्वदीययोः, पदपङ्कजयोः =पादपद्मयोः, रेणुभिः = धूलिकणैः, रक्तैः=लोहितैः, अनुरागपूर्णैश्च, कारुण्यसान्द्रमधुभिः =कारुण्याभिन्नैः, सान्द्रैः=स्निग्धैः, मधुभिः= मृद्वीकारसैः, सेवाऽऽनते=सेवार्थमानते , अस्य =मम, फाले =फालभागे , दुरदृष्टलिपिं =दुरदृष्टसूचिकां स्रष्टा लिखितामपि, लिपिं=लिखिताक्षरविन्यासं, प्रमृज्य=निर्वाप्य, ब्रह्मलिखितलिपेरपि प्रामर्जनसामर्थ्यं भक्ताभीष्टसल्लिपिलेखनसामर्थ्यं च मातृपदनखानामस्तीति भावः । माधुर्येण धुर्यां =संभृतां भारवतीं, कवितां=कवनशक्तिं तन्निष्पन्नामित्यर्थः । विलिखन्तु=विशेषेण त्वदेकरसवैशिष्ट्यपूर्णतया लिखन्तु । त्वदेकरसरस्यकवनशक्तिमनुगृह्णन्त्विति भावः ।

**Nandini :-**मातः = O my mother ! , तव पन्नखाग्राः = The nails of your feet, त्वदीयपदपङ्कजरेणुरक्तैः = dyed with the pollen- dust of your lotus feet, कारुण्यसान्द्रमधुभिः =wetted by the honey of your abundant mercy, सेवानते अस्य फाले =On this man's brow ( i.e. the poet's) which touches your feet in the act of bowing, दुरदृष्टलिपिम् = the ill-fated writing written by Brahma, प्रमृज्य= erasing it, माधुर्यधुर्यकवितां विलिखन्तु= May they write as my share on my brow, the power of writing mellifluous poems.

The nails of the DivineMother's feet have the power of obliterating the ill - fated writings of Brahma. By bowing at her feet, one can not only get rid of unpleasantness but become blessed with pleasing and desirable boons. Her lotus -feet have loving redness and merciful honey. Using her nails as writing pens, may she overrwrite on my brow as on a magnetic tape, the capability of writing honey-oozing poems so that the ill-fated scribblings of Brahma get erased by themselves.

28. गास्यामि तेऽम्ब ! निगमागमसंस्तुतार्यं
व्यासीभवंश्चरितमार्द्रहृदम्बुजातः ।
व्यालेखिताऽस्मि जनहृत्फलकेऽपि च त्वां
तेजोमयीं कवितया करुणा भवेत्ते ॥

अन्वय :– अम्ब ! ते करुणा भवेद्यदि, अहं आर्द्रहृदम्बुजातः व्यासीभवन् निगमागमसंस्तुतार्यं ते चरितं व्यालेखिताऽस्मि । जनहृत्फलकेऽपि च तेजोमयीं त्वां कवितया व्यालेखिताऽस्मि ।

नन्दिनी :– अम्ब ! ते करुणा भवेद्यदि= तवानुग्रहो यदि भवेदित्यर्थः । आर्द्रहृदम्बुजातः =स्वात्मभावनया मात्रात्मभावनया च तदेकरसार्द्रहृदयं अम्बुजातमिव यस्य सः । ततः व्यासीभवन् = अव्यासः व्यास इव सम्पद्यमानीकृतः सन् पाराशर्यवचस्संपन्नस्सन्नित्यर्थः । निगमागमसंस्तुतार्यं– निगमाः=वेदाः, आगमाः=देवपूजाविध्यादि (मन्त्रयन्त्रोपासनाक्रमदेवालयविग्रहादि– प्रतिष्ठावास्तुशिल्पनृत्यगानपाकादि) बोधकशास्त्राणि – "आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ मतं च वासुदेवस्य तस्मादागममुच्यते " तैः वेदशास्त्रादिभिः, संस्तुतं=सम्यक् प्रकाशतया प्रकीर्तितगुणातिशयवत् सम्यक् परिचितमित्यर्थः । आर्यं च = सर्वोत्तमं कुलीनं ( 'ऋ' गतौ) गन्तुं योग्यं आश्रययोग्यं शरण्यतया गम्यमित्यर्थः । भक्त्या बुद्ध्या च गम्यमिति भावः। संस्तुतं च आर्यं चेति उभयविशेषणकर्मधारयः । तादृशं ते चरितं = आचरितं वृत्तमिति यावत् । गास्यामि । अपि च = अतःपरं, तेजोमयीं= तेजोरूपिणीं त्वां , जनहृत्फलकेऽपि च =जनानां हृदयफलकेऽपि च , व्यालेखितास्मि=विशिष्टतया विशालतया वा संपूर्णतया, लिखिष्यामि चित्रीकरिष्यामि इति भावः ।

**Nandini :-** अम्ब! = O mother ! ते करुणा भवेद्यदि = If you condescend to show mercy on me, आर्द्रहृदम्बुजातः = I, with my lotus- heart full with devotion towards you ( drenched with the joy of knowledge born of seeing you as my own self and as my mother's self ), व्यासीभवन् = assuming the form of Vyasa ( blessed with his word–

power), निगमागमसंस्तुतार्यं= Having been praised by the Nigamas (Vedas) and Agamas ( Scientific works explaining the worship, propitiation, quintessence etc. of the various gods) as all-surpassing wisdom - emanating , shelter - providing and worthy of worship.ते चरितं = the way of life followed and adopted by you ,गास्यामि = I will sing about it in poems strung with pleasing words and letters, ततः = afterwards जनहृत्फलकेऽपि च तेजोमयीं त्वां व्यालेखितास्मि = I will depict your glowing divine form fully on the heart-canvases of one and all.

O my mother ! your life story is a living example of what is said in Vedas and Sastras and hence deserves everyone's respect. My heart is engrossed with joy on having thought about your life with devotion. I wish to describe you in full. Kindly bless me with your grace. I will sing about your life assuming the form of a Vyasa. I will depict your divine effulgent form on the mind-canvases of all through the medium of my poems.

Agama is that which is expounded by Lord Siva, listened to by Parvati and approved by Lord Vasudeva. Agamas are scientific works of Mantra , Yantra, Upasanakrama, Devalaya Pratishtha, Vastu, Silpa, Nritya, Gana ( Singing), Paka ( cooking) etc. The life of the mother, ( who, ever followed the words and footsteps of Siva ) has the sanction of the all-pervading Vishnu i.e. has been approved by all as laudable.

29. **महामोहावेशैर्मलिनितसदर्थे मम हृदि**
**भवत्पादौ ध्यातुं नहि चिरमहं शक्त इति ते ।**
**कृपावीक्षादीक्षाकवचमचिराद्देहि जननि !**
**यतो भूयादेतन्मम चपलचित्तं त्वयि रतम् ॥**

**अन्वय :–** जननि ! महामोहावेशैः मलिनितसदर्थे मम हृदि भवत्पादौ चिरं ध्यातुं नहि शक्तः इति मह्यं अचिरात्ते कृपावीक्षादीक्षाकवचं देहि । यतः मम एतत् चपलचित्तं त्वयि रतं भूयात् ।

**नन्दिनी :–** महामोहावेशैः= सांसारिकवैषयिकादिमहामोहानां वस्तुतत्त्वानवधरकानां चित्तवृत्तीनां ममत्वादिचित्तवैकल्यानां वा, आवेशैः=ग्रहावेशसदृशावेशनैः, मलिनितसदर्थे– मलिनितः=मालिन्यवत्कृतः, सदर्थः =यथार्थः सत्यस्वरूपं यस्य तस्मिन्, मम हृदि=हृदये, भवत्पादौ= भवत्याः भवतोः मातापित्रोर्वा, पादौ=चरणौ, ध्यातुं=सुस्थिरतया बुद्धिविषयत्वेन

चिन्तयितुं , एकाग्रचित्तेन संभावयितुमित्यर्थः । चिरं =चिरकालं, क्षणकालं तु पारयामीत्यर्थः। नहि शक्तः = निश्चयेन अशक्तः, इति = इत्यतो हेतोः, जननि, अचिरात् = अनलसं सपदि, ते=तव, कृपावीक्षादीक्षाकवचं =करुणार्द्रकटाक्षवीक्षारूपायाः दीक्षायाः कवचं, नियमानुष्ठेय मन्त्रोपदेशात्मकरक्षाकवचं, यावच्छरीरमावारकं रक्षणमिति यावत् । देहि = दानेन अनुगृहाण। यतः= यस्मात्कृपावीक्षादीक्षाकवचात्, एतत् =इदं मयि दृश्यमाणं , मम, चपलचित्तं =चंचलचित्तं, त्वयि=सच्चिन्मयस्वरूपिण्यां, रतं= अविरतमासक्तं, भूयात् =स्यात् । त्वत्कृपावीक्षादीक्षा कवचधारणेन, कवचवत् सर्वाङ्गीणं समावृतैः तव कटाक्षैः मच्चपलचित्तं त्वय्येव समासक्तं भूयादिति भावः । न केवलं मम मनः त्वत्पदध्यानाय समर्थं स्यात्, अपि तु पूर्णायास्तव संपूर्णध्यानेऽपि मम चित्तं सुसमर्थं भूयादिति भावः ।

**Nandini :-** जननि = O mother ! अहं = I,महामोहावेशैः = being obsessed with the infatuation for familial and worldy pleasures, मलिनितसदर्थे मम हृदि = In my heart whose actual form is soiled, भवत्पादौ = your feet, चिरात् = for a long time ध्यातुं = to meditate on, इह = here, न शक्तः = I am not capable of ,अतः = therefore, अचिरात् = at once, ते = your, कृपावीक्षादीक्षाकवचम् = impenetrable armour of your merciful glance, देहि = bestow on me, यतः = with which,मम चपलचित्तं = my fickle mind,त्वयि रतं भूयात् = May (my fickle mind) get engrossed in you !

O my mother ! I am now infatuated with wife, children and their relations; my mind has become fickle with the advancing age. I am now not capable of grasping the quintessence of the objects. I am now confusing myself by mistaking good as not good and not good as good. All these infatutations now possess me as evil spirts. I am therefore not able to meditate on thy feet properly. Hence, O mother , make me wear the impenetrable armour of your merciful glances so that these external distractions cannot invade the well - guarded fort of my mind, which then can remain engrossed in thy blue lotus - feet.

दीक्षाकवचम् =The protective vibrational armour in the form of mantra given in the way enjoined by Sastra. In the Upanayanam and during the Chinmaya Disha ceremony ( the ceremony in which the incumbent wears the Siva Linga on his body repeating piously the Panchakshari mantra) the Guru sees the disciple -- i.e. gives

him the verbal Vibrational armour of mantra throwing at the same time kind glances on him, which strengthen it and make it impenetrable.

30. सदैव त्वां ध्याये तव पदमहःपूररसधेः
समुत्तुङ्गानन्तस्रवदमृतचिद्वीचिनिकरः ।
पवित्रीकृत्येमं नतममृतपूर्णं प्रतनुता-
दिति स्वान्ते शान्ते स्फटिक इव मातः ! सुविमले ॥

अन्व :– जननि ! तव पदमहःपूररसधेः समुत्तुङ्गानन्तस्रवदमृतचिद्वीचिनिकरः नतं इमं पवित्रीकृत्य अमृतपूर्णं प्रतनुतात् इति स्फटिके इव सुविमले शान्ते (मम) स्वान्ते सदैव त्वां ध्याये ।

**नन्दिनी** :– जननि ! तव पदमहःपूररसधेः –पदमहसां = पादज्योतिषां वचोज्योतिषां स्थानज्योतिषामपि च, पूरं =प्रवाहं , तदात्मकः, रसधिः =चिदानन्दरससागर इत्यर्थः । तस्य समुत्तुङ्गानन्तस्रवदमृतचिद्वीचिनिकरः–समुत्तुङ्गः= महोन्नतः, अनन्तः= नास्ति अन्तं यस्य सः निरवधिक इत्यर्थः । स्रवदमृतचिद्वीचीनां =स्रवन्तीनां अमृतचिद्वीचीनां =सुधाज्ञानतरङ्गाणां, अमृतात्मकज्ञानतरङ्गाणां च, निकरः=समूहः, नतं = प्रणतं, इमं =एतं मां, पवित्रीकृत्य=निर्मलिनं कृत्वा, अमृतपूर्णं –अमृतेन =सुधया अमृत भावेन च, पूर्णं =संपूर्णं , प्रतनुतात् = प्रकर्षेण विस्तृतं सर्वात्मकं कुरुतात् । इति =एवं, त्वां = जननीं त्वां, सदैव =नित्यमेव, स्फटिके+इव =स्फटिकमणाविव, सुविमले =सुनिर्मले, शान्ते = प्रशान्ते, स्वान्ते=हृदये,ध्याये =बुद्ध्या निरन्तरमनुस्यूततया चिन्तये ।

मातापितृगुरुदेवतादीनां पादयोरेव तद्दिव्यामृततेजस्सर्वस्वं भक्तोन्मुखतया समुद्वेलं प्रसरद् वर्तते । अतएव सामान्यतः तेषां नमस्कारादयः पादयोरेव क्रियन्ते । अभिषेकाद्यर्चनं शिरसि संपद्यते । एतेन प्रभावादिसंक्रमः पादाभ्यामेव भवति इति ज्ञायते । अत एव कविः मातृपदं महःपूररसधिमिव संभाव्य तदुत्तुंगस्रवदमृतचिद्वीचिनिकरेण स्वस्य पवित्रीकरणं प्रार्थयति । गुरूणां दिव्यानामाकारध्यानात् पदध्यानमेव प्रभावशालि इति भावः ।

**Nandini :-** मातः = O mother, तव पदमहःपूररसधेः = the ocean of chidanandarasa issuing from your feet in the form of a flow of effulgence, समुत्तुंगानन्त स्रवदमृतचिद्वीचिनिकरः = the high waves of nectar - oozing immortal wisdom flowing incessantly,**नतं इमं** = this bowing entity ( i.e. me, the poet )पवित्रीकृत्य = making me pure and perfect, अमृतपूर्णं = ( make me) surcharged fully with the immortal joy, प्रतनुतात् = may I be made into Sarvatmaka (तनु विस्तारे), इति = in this way.

स्फटिके इव सुनिर्मले शान्ते स्वान्ते = in my peaceful crystal - clear mind, त्वां सदैव ध्याये = I meditate on you always.

The divine and immortal effulgence of elders like mother, father, teacher and other deities will be rising up from their feet, ready to flow towards their devoted children. Therefore, the bowing service is usually performed at their feet only. The worship done by bathing the idol etc. is usually directed to their heads. The salutary influence of elders is transmitted usually through their feet to those who bow to them. For this to happen without any hindrance and delay, the devotee's heart should be clear like a crystal, i.e., it should cleanse itself of worldly desires and make itself a willing receptacle to the flow of light emanating from the mother's feet. O my mother! make my heart clean with the gushing flow of the light of consciousness and fill it up with the same.

31. **तवोत्सङ्गोऽसङ्गस्सकलभवकालुष्यतमसां**
**महोत्तुङ्गोरङ्गो निखिलसुखशान्तैकमहसाम् ।**
**सुखस्वापः स्वात्मालय इह शिशोर्मे जननि! चि -**
**द्रसानन्दक्रीडाकलनसुमनोनन्दनमहो ॥**

**अन्व** :— जननि (तव) शिशोः मे इह तव उत्सङ्गः सकलभवकालुष्यतमसां असङ्गः निखिलसुखशान्तैकमहसां महोत्तुङ्गः रङ्गः, सुखस्वापः स्वात्मालयः (पर्यन्ते) चिद्रसानन्दक्रीडाकलनसुमनोनन्दनं अहो ।

**नन्दिनी** :— इह = अस्मिन् लोके, (तव) शिशोः= शिशुभूतस्य, मे =मम, तव=ते, उत्सङ्गः= उपविष्टायाः ऊरुप्रदेशः, सकलभवकालुष्यमहसां –सकलानां=समस्तानां, भवकालुष्याणां= जन्मप्राप्तसंसारमालिन्यात्मकानां, तमसां=आन्ध्यानां, असङ्गः= सङ्गाभावरूपः, सच्चिदानन्द–ज्योतिर्मयरूपः इति भावः । अत एव निखिलसुखशान्तैकमहसां–निखिलानि सुखानि शान्तयश्च एव एकानि=मुख्यानि, महांसि=तेजांसि, तेषां महोत्तुङ्गः=महोन्नतः, रङ्गः= रङ्गस्थलं सुखशान्तितेजोविलासानां महारङ्गभूमिरिति यावत् । सुखस्वापः= स्वप्राद्यभावेन सुखनिद्रासमुद्रैकरूपः चिदेकाभासरूपो वा, अत एव, स्वात्मालयः=स्वात्मनः आनन्दमयस्य आलयः= स्वात्मनि आसमन्ताल्लयः, एवं च तद्द्वारा पर्यन्ते चिदानन्दक्रीडाकलनसुमनोनन्दनं =चिदानन्दमयानां क्रीडानां, कलने = क्रीडने भाविते वा संभाविते वा क्रीडने अनुभवेवा, सुमनसां= शोभनमनस्कानां शिशूनां, निग्रहेण सुस्वाधीनमनस्कानां त्वदेकचित्तानां, देवानामपीत्यर्थः। नन्दनं = आनन्ददायि दव्योद्यानं, इति, अहो=आश्चर्यम् । सदैव शिशूनामानन्ददायी

तवोत्सङ्ग इति भावः। संसारकालुष्यदूरः ,सुखशान्तितेजोधाम, तत्त्वज्ञानसुखनिद्रासमाधिस्थानं, शिशुचिदानन्दक्रीडानन्दनं च मातृरुत्सङ्गस्थानं भवति इति तात्पर्यार्थः ।

**Nandini :-** जननि ! = O my mother!, शिशोर्मे = to me, your child. तव + उत्सङ्गः = your lap, सकलभवकालुष्यतमसां असंगः = has no place for the darkness of all worldly sins, निखिलसुखशान्तैकमहसां महोत्तुङ्गः रङ्गः = a pretty elevated stage for all the brilliant colours of peace and happiness,सुखस्वापः = It is of the form of my pleasant sleep, स्वात्मालयः = ( hence) it is the single abode of both the joys of Jeevatman and Paramatman ( i.e. it is the place where Jeeva merges into Paramatman), अहो चिद्रसानन्दक्रीडाकलनसुमनोनन्दनम् = Oh ! Verily it is the divine garden of joy , even during the waking stage, for not only to the child engrossed in pure, joyous, playful acts but to those pure-minded divine beings who look on the playing child too.

O my mother ! My childhood was spent in your lap. Whenever I forsook it, I used to weep being overpowered by the darkness of ignorance. No sooner had I come back to your lap, I used to dance with inexplicable joy moving my hands and legs hither and thither, manifesting that pure joy through my smiling face.

For this dance performance, your lap had assumed the shape of an elevated stage. All other dances of worldly pleasures are performed on the narrow and low stages of sinful streets of the world. On the world's stage, there is no co-ordination between the Self, the body and the dance. It is doubtful whether the audience get any happiness or not but it is certain that there is no place there for Soul - Joy. Instead, one would experience certainly creeping pangs about the nature of performance.

Th child's sleep on the lap of the mother is equivalent to the Yoga Samadhinidra. As worldly pollutions invade with time, this type of sleep forsakes. On the mother's lap, the child feels Soul-joy; when it wakes up there, then too, it is engrossed in its play and feels by itself ( without the need of a second person ) the ecstasy of the play. The onlookers too, contacting that pure joy, are transformed into divine beings for the time being and are transported into the divine garden of pure joy.

32. शिशुत्वं मे सप्तस्वरमधुरसाङ्गत्यकलना
कलापूरैर्गीतैः श्रुतिलयमनोमोहनरसम् ।
चिरं वीणेवाङ्के सुमृदुनि सुधासारहृदये !
कराभ्यां ते मातर्ललितमिह संलापितमभूत् ॥

**अन्व** :– सुधासारहृदये ! मातः ! ते मृदुनि अङ्के सप्तस्वरमधुरसाङ्गत्यकलनाकलापूरैः गीतैः मे शिशुत्वं वीणा इव ते कारभ्यां श्रुतिलयमनोमोहनरसं ( यथा ) चिरं इह ललितं संलापितं अभूत् ।

**नन्दिनी** :– सुधासारहृदये –सुधायाः=अमृतस्य, आसारः=धारासम्पातः समन्तात्प्रसारिवर्षरूपः, सुधायाः सारः=सत्त्वरूपो वा, सः हृदये यस्याः तस्याः संबुद्धिः, मातः! जननि! ते =तव, मृदुनि =सुकुमारे, अङ्के=उत्सङ्गे, सप्तस्वरमधुरसाङ्गत्यकलनाकलापूरैः = सप्तानां स्वराणां 'स रि ग म प ध नि ' रूपाणां षड्ज – ऋषभ-गान्धार-मध्यम– पंचम –धैवत–निषादरूपाणां , कलने=मधुरसाङ्गत्यसुसंयोजने, याः कलाः=नैपुण्यानि, अव्यक्तमधुरनादाश्च , तासां पूरैः =संगतिकरणकलाप्रवाहरूपैः, गीतैः = गानैः, सप्तस्वराणामुक्तानां, मधुरस्य =स्वादोः "ये गत्यर्थास्ते बुद्ध्यर्थाः" इति न्यायेन "शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी" इत्युक्त्या च सांगत्यस्य =सम्यगवगमनरूपज्ञानस्येत्यप्यर्थः । तस्य कलनेषु= संपादनेषु, याः कलाः =निपुणताः पूरैः=प्रावहरूपैः तासां गीतैः = गानैरित्यप्यर्थः संभावनीयः । तादृशं (अत एव ललितं=सुन्दरसुकुमारं) मे=मम, शिशुत्वं=शैशवं बाल्यं, वीणेव=सप्ततन्त्रीवाद्यविशेषं इव, इह अस्मिन् लोके, श्रुतिलयमनोमोहनरसं–श्रुतिः= समस्तगीतस्य मातृरूपः स्वरविशेषः, लयः =नृत्तगीतवाद्यादीनां साम्यस्थितिः । गीतानुगमा श्रीुतिः मातृरूपः । वाद्यानुगमो लयः पितृरूपः, "श्रुतिर्माता लयः पिता" इत्युक्तेः । ताभ्यां श्रतिपेयगीत्या, शरीरे तालानुगुण्येन ताडनेन उभयसाम्यरूपेण लयेन चेत्यर्थः । मनसः= मम अन्येषां च श्रोतृणामपि चित्तस्य, मोहनेन= तदेकपरवशत्वसंपादनेन, रसः=स्वात्मचिदानन्दः यथा भवति तथा । अपि च परमानन्दप्राप्तिदशायां शब्दतत्त्वग्राहके– न्द्रियस्य श्रोत्रस्य अन्तरिन्द्रिये मनसि लयः, तस्य चात्मनि चिदानन्दमये लयः इति कृत्वा श्रुतिलयस्थानस्य मनसोऽपि मोहनेन = आत्मैकपरवशत्वसंपादनेन, रसः=स्वात्मचिदानन्दरसः यथा भवति तथेत्यपि अवगन्तव्यम् । ललितं=सुन्दरसुकुमारं यथा तथा, कारंभ्यां =हस्तभ्यां,संलापितं =सम्यक् संवादितं अभूत् ।

ब्रह्मानन्दसब्रह्मचार्यानन्दप्रापणाय गायन्त्या त्वया तव उत्सङ्गे मच्छैशवं शरीरं चिरं तादृशनिद्राप्राप्तिपर्यन्तं कराभ्यां ताडितमभूत् । तत्ताडनं वीणामृदङ्गवादनमिव मद्देहे श्रुतिगीतमाधुर्यं प्रस्रवत् सत् मां सत्यं ब्रह्मानन्दसब्रह्मचारिनिद्रानन्दपरवशमकरोदिति भावः । श्रुतिगीतिताल–लयादिनादब्रह्मानुभूतिरभूदिति सारांशः । "शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी" इति सूक्तिरत्र स्मर्तव्या । श्रुतिर्नाम स्वरारम्भकावयवध्वनिः । एभ्यः श्रुतिभ्यः सप्त स्वराः, तेभ्यो ग्रामाः , तेभ्यो

जातयः, तेभ्यश्च रागाः संजायन्ते । दीप्ता आयता करुणा मृद्वी मध्यमा इति पञ्च श्रुतिजातयः। एताः स्वरेष्वपि भवन्ति । स्वरो नाम श्रोतृरञ्जको ध्वनिः । तालोनाम हस्तयोर्वा अङ्गुलीनां वा आकुञ्चनप्रसारणादिक्रियाभिः कालस्य मानम् । एतच्च – शिवशक्त्यात्मकम् । तकारः शिवः । लकारः शक्तिः । कालस्यैतस्य आद्यन्ते शिवशक्ती । एतदाद्यन्तव्यापी (दशप्राण) कालः ताल ः। लयो नाम नृत्तगीतवाद्यानां समयोगस्थितिः । गीतेः तावत् श्रुतिर्माता लयः पिता।

" प्रथम श्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया सर्वावयवलक्षणा
तकारः शङ्करः प्रोक्तो लकारः शक्तिरुच्यते । शिवशक्तिसमायोगात्तालनामाभिधीयते।।
हस्त द्वयस्य संयोगे वियोगे चापि वर्तते । व्याप्तिमान्यो दशाप्राणो सकालस्ताल संज्ञिकः।।
(सं.वि.द.)। तलन्ति तिष्टन्ति गीतवाद्यनृत्तान्यत्रेति ताल ः । " तल प्रतिष्ठायाम् " ।

"तालः कालक्रियामानम् – लयस्साम्यम् "। लीयन्ते साम्ये नृत्तगीत वाद्यादयोऽस्मिन्निति लयः (अमरः) ।

**Nandini :-** सुधासारहृदये मातः = You, whose heart rains nectar in a perennial flow, O mother ! सुमृदुनि ते अङ्के = On your soft lap, सप्तस्वरमधुरसांगत्यकलनाकलापूरैः गीतैः = with the sweet songs composed of the rainbow colours of the seven tones (स,रि,ग,म,प,ध,नि – षड्ज, ऋषभ, गांधार,मध्यम, पञ्चम, धैवत and निषाद ), मे ललितं शैशवं = my tender childhood, वीणा इव = like the seven-stringed Veena,इह = here, श्रुतिलयमनोमोहनरसं = the sound and music of the song gets first absorbed by the auditory apparatus ( labyrinthine space of the ear) which makes the sixth–sense – the mind – ecstatic with 'Sruthi ' and 'Laya' producing Soul -Joy. ललितं = tender and beautiful, कराभ्यां = with the two hands, चिरं = for a long time, संलापितं अभूत् = is properly played on and made to spell out.

O my Mother ! All my childhood was mostly spent on your lap. To make me sleep while I was weeping, you used to put me on your lap and sing lullabies. I used to lie there as if spell - bound. My body was aVeena for you. Wiht your joyous and vibrant singing, I used to be filled up with sweet vibrations. Your adeptness in singing and tuning filled my ears with vibrant joy. Thus, all my childhood had been spent in learning through your mellifluous vibrant songs that I am ever blissful – Anandamaya.

Now that blissful state has been forgotten, bless me with your

grace so that I recollect it and become blissful once again.

" प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ।
तकारः शङ्करः प्रोक्तो लकारः शक्तिरुच्यते । शिवशक्तिसमायोगाद् तालनामाभिधीयते।
ह्रस्वद्वयस्य संयोगे वियोगे चापि वर्तते । व्याप्तिमान्यो दशप्राणैः स कालस्तालसंज्ञकः ।"

श्रुति = the sound of the tone in its inception., स्वर = that which by itself makes the audience enjoy, ताल = तलन्ति तिष्ठन्ति गीतवाद्यनृत्तानि अत्र इति तालः। तल प्रतिष्ठायाम् । तालः कालक्रियामानम् । 'त' is Siva and 'ल' is Shakti. The singing, the playing of the musical instruments and the dancing – all are established in ताल . It measures time. लय = लयः साम्यम् । लीयन्ते साम्ये नृत्तगीतवाद्यादयो अस्मिन् इति लयः। Laya is that stage in which the dance, the song and the instrument are in unison. It is said that श्रुति is the mother and लय is the father, because श्रुति and लय produce आनन्द the child.

33. करेण कमलोदरद्युतिमनोज्ञमृद्वङ्गुली–
तलेन मणिकङ्कणस्वनितमुग्धसर्वेन्द्रियः ।
मृदङ्ग इव मर्दितो यदपि पृष्ठ एषोऽम्ब ! ते
चिदेकरसमग्नवत् शिशुरभूत् प्रसुप्तस्स्वयम् ॥

अन्व :– अम्ब ! कमलोदरद्युतिमनोज्ञमृद्वङ्गुलीतलेन ते करेण पृष्ठे मृदङ्गे इव मृदङ्ग इव वा यदपि मर्दितः, मणिकङ्कणस्वनितमुग्धसर्वेन्द्रियः एषः ते शिशुः चिदेकरसमग्नवत् स्वयं प्रसुप्तः अभवत् ।

**नन्दिनी** :– अम्ब ! कमलोदरद्युमिनोज्ञमृद्वङ्गुलीतलेन =कमलस्य, उदरस्य =गर्भभागस्य, द्युतिना =कान्तिसदृशकान्त्या, मनोज्ञं मृद्वङ्गुलीनां तलं = उपरिभागः यस्य तेन, करेण=हस्तेन, कराग्रेणेति यावत् । पृष्ठे =पृष्ठभागे, मृदङ्ग इव मृदङ्गे इव वा = मुरजः इव मुरजे इव वा यदपि =यस्मात्कारणादपि ,मर्दितः=संहननैर्बहुशस्ताडितः, तस्मात्कारणादेव मणिकङ्कणस्वनित मुग्धसर्वेन्द्रियः=मणिस्थगितानां कङ्कणानां =हस्तवलयानां, स्वनितैः=नादैः, मुग्धानि = मोहमुपगतानि परवशंगतानि, सर्वाणि इन्द्रियाणि= अन्तर्बाह्यानि मनोज्ञानकर्मेन्द्रियाणि यस्य सः । तादृशः सन् एषः ते शिशुः, चिदेकरसमग्नवत् = ज्ञानानन्दैकरसनिमग्नः इव, स्वयं प्रसुप्तः= निन्द्रितः अभूत्। ताडनं सामान्यतः बाधाकरमेव । तेन शिशुप्रसुप्तेः अनैचित्यमभ्यूह्य कविनाऽत्र शिशौ मणिकङ्कणस्वननिमित्तकप्रसुप्तिरभ्यूहिता । कङ्कणमृदुनादस्य मृदङ्गतालानुषक्तस्या– नन्दनिद्राजनकताया निरपायात् । करकङ्कणनादप्रादुर्भावे पृष्ठमर्दनताडनं लयानुबद्धमभूदित्यर्थः । अत एव मृदङ्ग इव मर्दित इत्युक्तम् । न तु मृत्पिण्ड इवेति भावः ।

**Nandini :-**अम्ब =mother !, कमलोदरद्युतिमनोज्ञमृदु+अंगुलीतलेन ते करेण =with your palm bright with the redness of the interior of a lotus, and adorned with tender fingers, एषः=this your child, पृष्ठे =on its back, मृदंगे इव मर्दितो यदपि =though struck like as on a drum, अयं शिशुः=this, your child, मणिकङ्कणस्वनितमुग्धसर्वेन्द्रियः=all my sense organs and other ones were made to forget themselves in ecstasy listening to the sweet sounds emanating from the stone-studded bracelets on your hands, चिदेकरसमग्नवत् =as one who dived deep into the deep stream of wisdom-joy, स्वयं =by myself (i.e. without being goaded into by others), प्रसुप्तः=I used to go into the sleep-samadhi.

Mother ! your palms were delicately red as the lotus -core . The bangles on thy hands were studded with precious stones. Whenever they turned on thy wrist, they used to produce sweet sounds. With those beautiful hands, you used to lead me into sleep. In the beginning, you used to strike on my back as on a drum. The beat used to soften down afterwards. My body - drum used to beat in tune with the sweet sounds produced by your turning and mutually striking stone-studded bangles. Thus this beat used to fill me with ineffable joy. Slowly I used to fall into sleep having been filled up with soul-joy. Now, in this advanced age, I am not able to sleep properly. Grace me with thy Mercy, Mother !

34. **तैलोद्वर्तनवारिसंस्त्रपनसंस्कारैर्मयि प्रत्यहं**
**यो दौर्बल्यनिवृत्तिपूर्वकसुशक्तात्मा समायोजितः ।**
**वृद्धस्सम्प्रति मातरन्तरनिशं बाह्योऽपि संपीडितः**
**शैथिल्यं ह्यनुगच्छतीति स तु नोपेक्ष्यस्त्वयैवाधुना ॥**

**अन्व :–** प्रत्यहं तैलोद्वर्तनवारिसंस्त्रपनसंस्कारैः मयि यः दौर्बल्यनिवृत्तिपूर्वकसुशक्तात्मा समायोजितः, (सः) संप्रति वृद्धः सन् अन्तः बाह्योऽपि अनिशं संपीडितः, शैथिल्यं अनुगच्छति हि, इति हे मातः ! सः तु त्वया एव अधुना नोपेक्ष्यः ।

**नन्दिनी :–** प्रत्यहं =प्रतिदिनं, तैलोद्वर्तनवारिसंस्त्रपनसंस्कारैः तैलोद्वर्तनानां=तैलमर्दनरूपाणां तैलाभ्यञ्जनप्रयुक्तानां, वारिसंस्त्रपनानां= उष्णजलस्त्रपनरूपाणां, संस्कारैः=परिकर्मभिः अङ्गसंस्कारैरित्यर्थः । मालिन्यनिर्मूलकतैलाभ्यञ्जनस्त्रानसंस्कारैरिति यावत् । मयि यः, दौर्बल्यनिवृत्तिपूर्वकसुशक्तात्मा –दौर्बल्यनिवृत्तिपूर्वकः=दौर्बल्यनिवृत्तिरेव पूर्वं=प्रथमं यस्य सः, शुशक्तः= सुशक्तिमान् सुसमर्थः, आत्मा=देहः आत्मा च, समायोजितः= सम्यक् समीचीनं

सुन्दरतया, आ =समन्तात् परिपूर्णतया च, योजितः= संकलय्य निर्मितः इति यावत् । तादृश शरीरवदात्मा, संप्रति=अधुना, वृद्धः सन् =वयसा मनसा च वार्धक्यमाप्तस्सन् बलहीनस्सन्नित्यर्थः। शैथिल्यं = सन्धिबन्धेषु शिथिलभावं , अनुगच्छतीति हि = अविरतमनुसृत्य प्राप्नोतीति हेतोः, अधुना = इदानीं, त्वया=मात्रा त्वया , नोपेक्ष्यः एव=सुतरामनुपेक्षणीय एव, अवश्यमादरणीयोऽहं सत्वरं शारीरिकमानसिकाध्यात्मिकतया सुदृढीकरणायेति भावः ।

**Nandini :-** तैलोद्वर्तनवारिसंस्नपनसंस्कारैः = While applying oil to my body, shampooing my hair, making me bathe and dressing me up, मयि = in me ( in my case ), यः दौर्बल्यनिवृत्तिपूर्वकसुशक्तात्मा समायोजितः = removing weakness, and investing my body and soul with great strength,सः = that strengthened body ( and Soul), संप्रति = now, वृद्धः = has become old अन्तःबाह्योऽपि = inside and outside as well,संपीडितः =is being pained,शैथिल्यं अनुगच्छतीति हि = as it is assuming an infirm state, मातः = mother!, स तु = this old self of mine, अधुना = now, त्वया न उपेक्ष्यः = ( Do not be indifferent towards me ) is not to be thrown into neglect.

In my childhood, you, O my mother ! massaged my body with oil, shampooed my hair, gave me a bath and dressed me up – thus making my body and soul strengthen up so that they were capable of performing all actions efficiently.

But now, my body has become old. It is now not able to move freely, nor is it capable of thinking properly. It is thus being afflicted mentally and bodily as well . Please do not be indifferent towards me now. Make me again strong by raining your Grace on me.

35. स्मरामि स्वाद्वन्नं कटितटमधिष्ठाय तु मया
पयस्यं क्षौद्राक्ताऽङ्गुलिषु वलितं संकवलितम् ।
यदाभुक्तं लीढं सकलममृतं ते करतले
तदन्तर्बोभूयादखिलगदहं मेऽम्ब ! निरतम् ।

अन्व :– अम्ब ! मया तु (तव) कटितटं अधिष्ठाय, यत् पयस्यं क्षौद्राक्ताऽङ्गुलिषु वलितं संकवलितं, आभुक्तं लीढं, सकलं तत् ते करतले अमृतम् । अम्ब ! अद्य, तत् स्वादु अन्नं अखिलं संस्मृतं सत् निरतं मे गदहं बोभूयात् ।

नन्दिनी :– अम्ब ! मया तु तव कटितटं अधिष्ठाय=कटिस्थले स्थित्वा, पयस्यं=

क्षीरपाकादिना संपादितं। क्षौद्राक्ताङ्गुलिषु– क्षौद्रेण = मधुना, अक्तासु =सक्तासु, अङ्गुलिषु=करशाखासु, वलितं =गोलिकाकारेणकृतं, यत् स्वाद्वन्नं=रुच्यं मधुरमन्नं, संकवलितं=सम्यक् कबलवत् कृतं मयापि सम्यक्कबलितं च । आभुक्तं–आ=समन्तात्, अधिकरुच्यतया संपूर्णतया, भुक्तं =खादितं अशितं, लीढं=आस्वादितं च, तत्=स्वाद्वन्नं, ते=तव, करतले=हस्ततले, अमृतं=सुधारूपं, निर्मरणसञ्जीवनमभूदिति यावत् । तत् =तादृशममृतस्वादु अन्नं, मे=सर्वधा रुग्णस्य मम, अन्तः = अन्तरङ्गे संस्मृतं सारभूततया स्थितं सत्, अखिलगदहं=सकलरोगहारि सुधामयसंजीवनं अन्नं । निरतं=सदैव, बोभूयात् =पौनःयुन्येन संभूयादित्यहमाशासे इत्यर्थः । इदानीं सर्वरोगपीडितं मां सर्वरोगनिवारकाऽमृतान्ननिरतदानेन संरक्षेति भावः ।

**Nandini :-** अम्ब= O my mother !, मया तु = by me ( तव ) कटितटं अधिष्ठाय =perching on a side of your body, being supported by your girdle -zone, पयस्यं =mixed with milk, क्षौद्राक्तांगुलिषु = with fingers dipped in honey, वलितं संकवलितम् = made into round mouthfuls, यत् आभुक्तं = (which) had been eaten by me, लीढं= licked up by me, ते करतले = in your hand, अमृतं तद् सकलं स्वाद्वन्नम् = all that tasty ambrosial food, स्मरामि = I remember (all this hazily);, अद्य = today, अखिलगदहं = that which can prevent all diseases, तत् = that tasty ambrosial food, निरतं =always, बोभूयात् =may I get it in abundance time and again !

I do remember hazily your feeding me in my childhood. You used to feed me then, with honied fingers, cooked rice mixed with milk made into tiny moufuls. I used to eat all of it and at the end I used to lick your fingers up. Now, the food I eat is not so savoury as that. O my mother! All that is touched by your hands is nectar. Eating that ambrosial food, I had spent my childhood. But now I am old, diseased and infirm. May I be fed now too by your sweet hands immortal food so that I be made immortal.

36. यावत्त्वहं जननि ! ते कटिमध्युवास
विश्वं व्यलोकि बहुवर्णरसस्वभावम् ।
चित्रं विचित्रमतिचित्रविचित्ररूपं
व्यज्ञायि तावदखिलं भवदीयतत्त्वम् ॥

अन्वः :– जननि ! यावत् अहं ते कटिं अध्युवास तावत् एव बहुवर्णरसस्वभावं चित्रं विचित्रं अतिचित्रविचित्ररूपं विश्वं व्यलोकि तावदेव अखिलं भवदीयतत्त्वं व्यज्ञायि ।

नन्दिनी :– जननि । यावत् =यावत्कालं अहं ते कटिं =कटिस्थलं, अध्युवास=अध्यारुरोह, (वस धातोः लिटि उत्तमपुरुषैकवचनम्) तावदेव =तावत्कालमेव, बहुवर्णरसस्वभावं– बहवः वर्णाः=श्वेतनीलाद्याः ब्राह्मणादिजातयश्च, रसाः=माधुर्यादयः शृङ्गारादयश्च, स्वभावाः=कामादिस्वस्वप्रकृतयः सात्त्विकादिप्रकृतयश्च, तेषां स्वरूपाणि च यस्मिन् तत् । अत एव चित्रं=नानावर्णवर्णितं, विचित्रं =आश्चर्यं, अतिचित्रविचित्ररूपं =अतिशयितं चित्रं विचित्रं च रूपं यस्मिन् तत् । अतिक्रान्तचित्रविचित्ररूपं विश्वातीतस्वात्मरूपं चेति तत्त्वार्थः । विश्वं = भूनभोऽन्तरालस्सर्वस्वं, विशति सर्वात्मना अस्मिन्निति विश्वं इति व्युत्पत्त्या "तत्सृष्ट्वा तदेवानुप्राविश"दिति वेदोक्त्या च सर्वान्तर्यामी स्वात्मा परमात्मा चेत्यर्थः। व्यलोकि=विशेषेण दृष्टं विशेषेण च ज्ञातम्, तदेव स्पष्टीक्रियते – अखिलं =समस्तं अविनाशि, भवदीयतत्त्वं =त्वदीयं यथार्थज्ञानं चैतन्याश्रयतत्त्वं च, व्यज्ञायि=सवैशिष्ट्यं ज्ञातं सुज्ञातमित्यर्थः ।

अत्र मातुः जगन्मातुः कटिप्रदेशस्य सर्वविश्वातीततया तत्राधिरूढेन शिशुना चित्स्वरूपेण, सर्वं विश्वं सविशेषं नश्वरं मिथ्यारूपमिव, तद्विश्वान्तर्बहिर्व्यापि –अणोरणीयः महतो महीयश्च सच्चिदानन्दाद्वयतत्त्वं सत्यमिति च विज्ञातम् । भूमेरुपग्रहे स्थितः भूमिमिवेत्यर्थः । परं तु मातृकटितटादवतारितः स एव शिशुः लौकिकस्सन् अनात्मज्ञः संवृत्तः इति अनुशोचामि मे व्यतीतं शैशवं प्रतीतिभावः ।

वस्तुतस्तु शिशुः संपूर्णज्ञानस्वरूपः । पञ्चज्ञानकर्मेन्द्रियद्वारा विषयेषु संवृत्तः विषयावृत्तज्ञानी भवति । परंतु तन्मूलमनन्तं ज्ञानं सत्यं न जानाति घटावृत्ताकाशं महाकाशमिव – इत्येतत्तात्त्विकमत्रानुगन्तव्यम् "स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं" इति विराड्रूपस्य भगवतः विश्वातिशायित्वं पुरुषसूक्ते सूचितम् । अत्र जगन्मातुर्मातुस्तु कटिस्थलमेव विश्वातिशायीत्यनिर्वचनीया परमपुरुषातिशायिनी मातृस्वरूपमहिमेति भावः।

**Nandini :-** जननि = O my mother !, यावत् = as long as, अहं ते कटिं अध्युवास=I sat on your girdle-saddle, तावद् =(only) so long, बहुवर्णरसस्वभावं = that which has many facets , various feelings, चित्रं =thus variegated, विचित्रं =that which springs up surprises, अतिचित्रविचित्ररूपं =that which expresses the infinite varieties of the Universal Lord through its astonishing multiplicities and forms, विश्वं =the whole universe from the Earth to the sky, व्यलोकि= I have seen, ततः= with that, अखिलं भवदीयतत्त्वं व्यज्ञायि= I have grasped your true form in its totality.

O my mother ! As long as I sat on your girdle-saddle I had seen all the Universe. For, all this universe rests very much below your girdle. I had seen all the world as it were from a vantage

point, as one sees the surrounding panorama from the top of a summit or as one sees the Earth from an earth-satellite. I could clearly perceive then all the colours and shades, all the varieties of creations which are the manifestations of the umpteen permutations and combinations of the three qualities – Sattwa, rajas and tamas–, all their tastes and all their sentiments. This multidimensional view had made me then to grasp your true self enlightening this world.

But when I left the seat on your girdlezone (i.e. when my childhood gave way to youth), my field of view had become narrow and very much limited. As one sees small letters through a magnifying glass, I have started looking at the extremely limited relations of wife and children, the limited environment of towns, villages, streets and houses, and the limited fields of knowledge as the most vast expanse. My arguments and discussions are centred on a limited part of the vast oceanic truth. As my view is narrowed down, I am not able to recognize that which is of the least size and that which is of the most huge size are but one. The huge tree is in the seed; there lies hidden an infinite number of potential seeds in a tree. "न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्वसोम्येति" (छान्दोग्योपनिषद् )

Uddalaka makes his son Swetaketu bring and break the fruit of a banyan tree. The father then asks the son to break one out of the many tiny seedlings seen inside the fruit. Nothing remains perceivable if this breaking continues. But the stubborn truth is that from this imperceivable "nothing" springs the huge banyan tree.

All this is daily seen by us but we are not able to grasp the unity of the atomic and the huge,.because, we have come away, far far way from the vantage point–the Divine Mother's girdle zone. The plight of all of us who have left off the vantage point is equal to that of a large fish changing its abode from the sea into a narrow well. O Divine Mother ! Bless me that I once again cling to your girdle zone so that I will be able to, as in my childhood, grasp the Ultimate without any distractions.

37. रविगुरुकविचन्द्रोद्भासिसौवर्णकाञ्ची –
कटितटमुषितं ते मातराशैशवं यत् ।
समधिगतमिदं तच्चित्रचित्रं च विश्वं
ह्यभवमतिविमूढस्तद्वियोगादिवाद्य ॥

अन्व :– मातः ! ते, यत् रवि गुरु कवि चन्द्रोद्भासिसौवर्णकाञ्चीकटितटं आशैशवं उषितं, तत् इदं चित्रचित्रं च विश्वं समधिगतं । अद्य, तद्वियोगादिव अति विमूढः, अभवम्।

नन्दिनी :– मातः ! यद्=यस्मात्कारणात्, आशैशवं =शैशवं यावत् , ते=तव, रवि – गुरु – कवि चन्द्रैः= सूर्यादिप्रभाकृत्या मणिभिरुत्कीर्णैरिति यावत् । उद्भासि=उच्चैः प्रभासमाना, सौवर्णकाञ्ची = सुवर्णनिर्मितं कटिसूत्रं, तादृशकाञ्चीप्रिया (रम्या) कटिरिति शाकपार्थिवादिवत् मध्यमपदलोपी समासः । तस्याः कट्याः तटं =उच्छ्रयः उन्नतस्थानमित्यर्थः । आशैशवं =शैशवंयावत्, उषितं =निवसितं मया अधिष्टितमित्यर्थः । तत् =तस्मात्कारणात् चित्रचित्रं =चित्रादपि चित्रं आश्चर्यादपि आश्चर्यमिति यावत् , इदं =एतद्विश्वं भूनभोऽन्तरालसर्वस्वरूपं ब्रह्माण्डं, समधिगतं=सम्यक् ज्ञातं, परंतु अद्य=इदानीं, तद्वियोगादिव = तत्कटितटाधिष्ठान– वियोगकारणेनेव, अतिविमूढः= मिथ्याप्रापञ्चिकलग्रमनस्कतया सत्यतत्त्वज्ञानाशक्तः केवलाऽज्ञ एव वा अभवं हि । अतः मामनुगृहाणाम्बेति स्वावेदननिवेदनम्।

विश्वरूपिण्याः जगन्मातुः कटितटं रव्यादि भास्वर ग्रहनक्षत्रादीनां परिभ्रमणस्थानं नभोऽन्तरालमिति रवि–गुरु–कवि–चन्द्रपदैः प्रतीयते । एवं च रव्यादि ग्रह–नक्षत्र भास्वरमण्डलानां विराड्रूपिण्याः जगन्मातुर्मातुः कटिसूत्रस्य सहजतयैव अलङ्कारत्वं सुसंपन्नमिति अहो मातुः कटेः वैभवमालोचानाऽपरिमिताऽनन्तप्रकाशमिति भावः । एतेन नक्षत्रताराग्रहमण्डल ज्योतिर्विश्वस्याप्यतिशायिनी मातुर्जगन्मातुर्मूर्तिरिति व्यज्यते ।

**Nandini :-** मातः= O my Mother ! यत् =for which reason, आशैशवं=throughout my childhood,ते = your, रविगुरुकविचन्द्रोद्भासि – सौवर्णकांचीकटितटम् उषितं = I used to climb and perch on your waist adorned by the golden girdle on which are depicted the figures of Sun,Jupiter, Venus etc, (in case of the Divine Mother: waist adorned by the resplendent girdle formed of the planets Sun, Jupiter, Venus etc.) तत्=for this reason, इदं चित्रचित्रं च विश्वं=this variegated world, समधिगतं= I could know it fully as I had seen it as an eye-witness would see अद्य = today, तद्वियोगादिव =as though because of having been separated from your girdle-saddle (त्वद्वियोगादिव= as though for having been separated from you,) अतिविमूढः अभवं हि =I became an ignorant

person, so much ignorant that I could not know even what is being seen.

As long I was sitting on your waist-seat adorned by the resplendent girdle formed of the celestial lights, I could see all the Universe. But now, after I left your waist, I became so ignorant that now, I am not able to know even a little about this limited terrestrial sphere surrounding me.

38. सुतेभ्यस्सर्वेभ्यो जननि ! महितात्मेन्द्रियमनो
मनीषादिस्वश्रीविभवविकसद्विश्वसृजने ।
विधेराश्चर्यैकस्वरससुकृतेस्सुन्दरशिव–
स्वलोकस्ते गर्भः प्रकटयतु चिद्योगमखिलम् ॥

**अन्व** :– जननि महितात्मेन्द्रियमनोमनीषादिस्वश्रीविभवविकसद्विश्वसृजने विधेः आश्चर्यैकस्वरससुकृतेः सुन्दरशिवस्वलोकः ते गर्भः सर्वेभ्यः सुतेभ्यः अखिलं चिद्योगं प्रकटयतु।

**नन्दिनी** :– जननि! सर्वेभ्यः सुतेभ्यः–तव सर्वेभ्यः पुत्रेभ्यः, महितात्मेन्द्रियमनोमनीषादि–स्वश्री विभवविकसद्विश्वसृजने–महितैः = महामहिमभिः (इति विभवविशेषणं) आत्मा, इन्द्रियाणि=बाह्यानि त्वक् चक्षु श्रोत्र जिह्वा घ्राणरूपाणि ज्ञानेन्द्रियाणि वाक्पाणिपाद पायूपस्थारूपाणि कर्मेन्द्रियाणि अन्तरिन्द्रियं मनश्चेत्येकादश, मनीषा=बुद्धिः, आदेः प्रभृतिरूपस्य, स्वस्य=आत्मनः, श्रियः=संपदश्च, विभवैः=स्वकार्यसाधनसामर्थ्यप्रभावैः, विकसतः=विकासमाप्नुवतः, विश्वस्य =ब्रह्माण्डस्य, सृजने =सृष्टौ, विधेः=विधातुः, आश्चर्यैकस्वरससुकृतेः = आश्चर्यमेव एकस्वं = मुख्यात्मा, तस्य रसस्य=आनन्दस्वरूपस्य, सुकृतेः= शोभनकर्मणः सत्कर्मणः सृष्टिकलाकौशल्यस्य च , सुन्दरं= मनोज्ञं, शिवं =मङ्गलं, स्वं च =सत्यात्म च – इति समाहारद्वन्द्वः । तस्य लोकः=विशालावासस्थानं सत्य-शिव-सुन्दरात्मकमित्यर्थः । मनोज्ञं शिवं = मङ्गलं, स्वं च =सत्यात्मरूपं – इति समाहारद्वन्द्वः । तस्य लोकः विशालावास स्थानम् , सत्य –शिव – सुन्दर मित्यर्थः । सुन्दरयोः = मनोज्ञानन्दमययोः शिवयोः विशालाक्षी–शिवलिङ्गार्ययोः , तथैव सदा शिवा शिवयोः च, स्वलोकः = स्वात्मानन्दचिन्निधानस्यसन्ततेः विश्वस्य च निवासस्थानम् । पितृपक्षे सन्तितिः जगत्पितृपक्षे जगतश्च स्वात्मानन्दचिन्निधानमित्यर्थः । " आत्मावै पुत्रनामीसि" " तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः उक्तविधः लोकः ते गर्भः = पिण्डोत्पत्तिस्थानं भवत् सत् , अखिलं =समस्तं चिद्योगं = ज्ञानयोगं सर्वेभ्यः सुतेभ्यः प्रकटयतु =प्रकाशयतु इत्यर्थः ।

अत्र जगन्मातुः मातुः गर्भः सत्यसुन्दरशिवस्वलोकः इति कथितः । प्रथमतः सः गर्भः "आत्मा वै पुत्रनामासि" इति विधया मातापितृस्वसर्वस्वानन्दैकलोकः (सृष्टिस्थानं) भवति । ततः सः गर्भः, "तत् सृष्ट्वा तदेवानुप्राविशत् " इति विधया सदाशिवब्रह्मणः विश्वशिश्वेकात्म

(विश्व+शिशु+एकात्म) चिदानन्दलोकः च भवति –इति हेतोः मातृगर्भः अखिलचिद्योग–प्रकाशनसमर्थः इति वर्णितः ।

कुलालसृष्टेरचेतनत्वात् अतिमात्रपरिमितत्वाच्च साधारणमेव कलाकौशल्यम् । विधातुस्तावत् सचेतनं प्राणिनां चक्षुरादिज्ञानेन्द्रियैः, वागादिकर्मेन्द्रियैः, अन्तरिन्द्रियेण सङ्कल्पविकल्पात्मकेन मनसा , निश्चयात्मिकया बुद्ध्या च स्वस्वसंपद्वैभवविकासविसृमरविश्वस्य सृष्टेस्तु असाधारणं अनिर्वचनीयं च कौशल्यम् । तादृशविधातृकौशल्यस्यापि बीजभूतस्य मनोज्ञमङ्गलसच्चिदानन्दस्य निधानलोक एव जगन्मातुर्मातुर्गर्भः । स तावदखिलं वैज्ञानिकं तात्त्विकं च चिद्योगं प्रकाशयत्विति कवेराशंसनम् । शास्त्रीयदृष्ट्या तात्त्विकदृष्ट्या च मातृगर्भस्तावन्मनोज्ञविश्वसृष्टेः तन्मूलतत्त्वस्य च रहस्यानां निलयः इति भावः ।

**Nandini:-** जननि ! =O my mother ! महितात्मेन्द्रियमनोमनीषादिस्वश्री–विभवविकसद्विश्वसृजने= in creating this macrocosm making it evolve out of the capable affluences of the Self, the Senses, the Mind, the Intellect etc, विधेः=of the creator, आश्चर्यैकस्वरससुकृतेः=for the skilful and auspicious act of the blissful and stupendous creation, सुन्दरशिवस्वलोकः=the beautiful land of Visalakshi and Siva (that loka in which they see themselves in their progeny) ते गर्भः सुतेभ्यः सर्वेभ्यः अखिलं चिद्योगं प्रकटयतु =May your Great Uterus enlighten all your children about the eternal and indestructible yoga of Truth, Knowledge and Bliss.

O my Mother ! we, your children, are a part and parcel of the one base– the Soul. We have the tactual sense-organ pervading our whole body, the optical sense-organ capable of perceiving the whole exterior, the auditory organ capable of listening to all vibrations the gustatory organ capable of tasting all savours, the olfactory organ capable of smelling all odours, all - expressive vocal apparatus, working hands, walking legs, the excreting apparatus and the inner instruments -- mind (supervising and directing the working of the sense organs and expriencing all the pleasures and pains) and the intellect (capable of thinking and knowing about oneself, the world and its Maker). The reach and capability of all these instruments are infinite and inestimable. Your Uterus is the creative ground for keeping all this bliss-complex at one place. For Brahma's auspicious activity of creation, your womb is the base. "आत्मा वै पुत्रनामासि " "तत् सृष्ट्वा तदेवानुप्राविशत् ।" These sentences of

Veda tell us that you, the parents of the Universe, create us, your progeny and enter into us. Therefore, O my mother ! you, being a personification of Bliss and Knowledge, create us as epitomes of Bliss and knowledge. But we soil ourselves while playing with the worldly pleasuers. We identify ourselves with this blackened mask so much that we begin to think deeply that we are but incarnations of eternal sorrow. O my Mother ! unmask us and make your Bliss-light encompass us.

**39. रजो बीजं संवित् त्रितयममलं यत्र कलितं**
**सुसङ्क्लृष्टं पुष्टं सुफलितमनन्तात्ममहसा ।**
**स नस्तेऽन्तर्ब्रह्माण्डसदृशरहोयोगनिलयः**
**तनोतु क्षेमं मज्जननि शिवगर्भोऽम्बुजनिभः ।।**

**अन्व :–** मज्जननि! यत्र रजः बीजं संवित् एतत् त्रितयं, अमलं,कलितं, सुसङ्क्लृष्टं, पुष्टं, अनन्तात्ममहसा, सुफलितं, सः, अन्तर्ब्रह्माण्डसदृशरहोयोगनिलयः ते अम्बुजनिभः गर्भः नः क्षेमं तनोतु ।

**नन्दिनी :–** मज्जननि! = मज्जनयित्रि! रजः=स्वस्याः योगानन्दसम्पृक्तं शोणितं, बीजं =जनकस्य योगानन्दसम्पृक्तं शुक्रं, संवित्=ज्ञानं चैतन्यं तदुपलक्षितं सच्चिदानन्दाभिन्नमात्मेत्यर्थः । ज्ञानमनस्सहितसूक्ष्मभूतात्मकजीवात्मेत्यर्थः (अन्तःकरणाभासश्चेतनः)। एतत् त्रितयं=एतत्रयाणां समूहः, अमलं =निर्मलं यत्किञ्चिद्दोषलेशेनापि शून्यं निर्दुष्टत्रितयस्यैव सद्गर्भजनकत्वात् । यत्र=यस्मिन्गर्भे, कलितं =कललरूपेण (उल्वरूपेण) सान्द्ररसात्मना सङ्गतं सम्मिलितं, यथा च सुसूक्ष्मा तप्तकाञ्चनरसबिन्दुद्वयैकीभूता गुलिका , पारदबिन्दुद्वयस्य वा नलिनीदलजलबिन्दुद्वयस्य वा सम्मिलितैकीभूता गुलिका वा , शुक्तिपतितस्वात्यम्बुदाम्बुबिन्दु गुलिका वा, निर्मला चञ्चच्चैतन्यरसतेजोमयी, तथैव सुसूक्ष्मरजश्शुक्रचैतन्य विलोलविलसद्गुलिकारूपं कललं ज्ञानात्मयोगात् शुक्रशोणिते अस्मिन् गर्भकोशे कलतः =मिथः सङ्गच्छतः सम्मिलतः सम्यक् चिदानन्दैकसम्पृक्ते शुक्रशोणिते चतुर्विंशत्तत्त्वात्मकतया एकीभवतः इति कललम् । तथा कलितमित्यर्थः । कलसंख्याने कामधेनुश्च कवीनाम् । उलत्यावृणोति गर्भमित्युल्वम् । उलसंवरणे। चैतन्यमेव शुक्रशेणिते एकीकृत्य सर्वात्मना संवृणोतीति व्युत्पत्त्या न केवलं शुक्रं न केवलं रजश्च आत्मचैतन्यं विना गर्भं जनयतः । तथा च चरकसंहिता :–" पञ्चमहाभूतविकारसमुदायात्मकः चेतनाधिष्ठानभूतः गर्भः चेतानषष्ठो धातुः चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्तते । स च सत्त्वोपादानः आकाशवाय्वग्निजलभूतानि शब्दादिगुणवन्ति अणुकालेनैव सृजति", (चरकसं. शारीर. 4.6.8) याज्ञवल्क्यस्मृतौ मिताक्षरायां च :–"स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते पञ्च

धातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः । इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः धारणा प्रेरणं दुःखमिच्छाहङ्कार एव च प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः । " ऋतुवेलायां स्त्रीपुंसयोर्योगे स्त्रीगर्भसंयुक्ते विशुद्धे शुक्रशोणिते स्थित्वा पञ्चधातून् पृथिव्यादिपञ्चमहाभूतानि शरीरारम्भकतया स्वयं षष्ठश्चिद्धातुरात्मा प्रभुः शरीराम्भकारणादृष्टकर्मयोगितया समर्थो युगपदुपादत्ते योगायतनत्वेन स्वीकरोति, (याज्ञ स्मृयति धर्मप्रक. 74) तथा च शारीरके :– "स्त्रीपुंसयोस्संयोगे योनौ रजसाभिसंसृष्टं शुक्रं तत्क्षणमेव सह भूतात्मना गुणैश्च सत्त्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये तिष्ठति " (मिताक्षरा) " श्रीशङ्कराचार्यस्य प्रपञ्चसारतन्त्रेऽपि च :– जरायुजस्तु ग्राम्यातः क्रियातः सृतिसम्भवः स जायते चतुर्विंशत्तत्त्वसंयुक्तदेहवान् .........मायी यं नाम योषोत्थं पौरुषं कार्मकं मलं आणवं नाम संयुक्तं मिलितं तन्मलद्वयं सूक्ष्मरूपाणि तत्त्वानि चतुर्विंशं मलद्वये तत्र युक्तिं व्रजन्त्याशु ततस्तद्गर्भमारुतः संक्षोभ्य संवर्धयति........ स्वगतैर्मरुदग्न्यद्भिः स्विद्यते क्वाथ्यते च तत् मिश्रीभूतं तदह्नैव मातुरङ्गुष्ठसम्मितम् । (प्रपंचसारतन्त्रं पुट . 71-76)। इति । श्रीमद्भागवते व्यासोऽपि –"कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये स्त्रियाः प्रविष्ट उदरं पुंसोरेतःकणाश्रयः कललं त्वेकरात्रेण" श्रीमद्भाग. (3-31-1) इति । दैवं आत्मा नेता गर्भप्रापयिता यस्मिन्कर्मणि तत् । तादृशेन कर्मणा चैतन्यव्याप्त्या इत्यर्थः । चैतन्यमेव ज्ञानस्वरूपमानन्दस्वरूपम् , तेनैव विश्वप्राणिसृष्टिः । तां प्रविश्य तस्याः सृष्टेः स्थितिः अन्ते तस्याः सृष्टेः स्वानन्दात्मन्येव लयश्च सम्भाव्येते । तैत्तिरीयोपनिषदि भृगुवल्ल्यां अन्न-प्राण-मनो–विज्ञानानां ब्रह्मात्मत्वज्ञानानन्तरं पार्यन्तिकतया आनन्दस्य ब्रह्मात्मता प्रकाशिता । अतः आनन्दस्यैव ब्रह्मात्मत्वम् –"आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति" – इति आनन्द एव ब्रह्मा तस्यैव प्राणिनां जनकत्वं जीवकत्वं (जीवयितृत्वं) अन्तः स्थित्वा पोषकत्वं आनन्दस्वरूपे एव विलीय आनन्दान्तस्सर्वात्मना व्यापकत्वं च (आनन्दमयीभवनमिति यावत्) प्रतिपादितम् । अत्र दम्पत्योर्योगानन्दः प्रथमं सूक्ष्मतया सर्वाङ्गीणमाविष्कृतो भवति । तेन तत्सहकृततयैव निस्सृते शुक्रशेणिते आनन्दचैतन्यवशात्संपृक्ते भवतः । तथा च चरकसंहिता-स्त्रीपुंयोगे पुरुषस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात्संभवति । स तथा हर्षभूतेनात्मनोदीरितश्चाधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्त्योचितेन पथा गर्भाशयमनुप्रविश्यार्तवेन संसर्गमेति (चर. सं. शरीर.4-7) इति । मिश्रितं सुसूक्ष्मं तदुभयं मातृगर्भाशये सुसूक्ष्मं तप्तकाञ्चनरसगोलकमिव वा पारदगोलकमिव वा नलिनीदल जलबिन्दुगोलकमिव वा शुक्तिपतित स्वात्यम्बुदाम्बुबिन्दुगोलकमिववा चञ्चत्सूक्ष्मचेतनप्रभाभासुरं सक्रियं, तत् क्षणमेव योषोत्थमायीयेन पुरुषोत्थकार्मिकेण च मलेन पञ्चभूतादि चतुर्विंशत् तत्त्वैः त्रिगुणैश्च आकलितं (युगपद्योगायतनं) आणवं नाम रूपं प्राप्य तदन्तर्गतै

स्सूक्ष्मैर्मरुदाग्नेजलैस्सचेतनैस्संकलितं (स्विद्यमानं क्काथ्यमानं च ) कललं वा उल्बं वा भवति। एवमुपर्युक्तविधया कलितं=कललीभूतं सुसंकृष्टं =सुष्ठु परस्परानन्दाकर्षणेन चेतनावत्तया अतिसूक्ष्मसूक्ष्मांशोष्वपि नीरक्षीरवत्संमिलितं, पुष्टं=क्षणं क्षणं दिनं दिनं प्रतिमासं च यथाविधि चेतनाप्रवृत्ततदन्तर्गतवायुतेजोम्बुपाकप्रभावात् पुष्टिमाप्तं, ततः अनन्तात्ममहसा= सर्वव्यापिचिदानन्दात्मतेजसा, सुफलितं=सूक्ष्मात्मरूपान्महात्मरूपेण उद्भूततया सुदृश्यात्मसुन्दररूपेण, फलितं=सर्वाभिलषणीयपरिपक्व (परिपूर्ण) चिदानन्दरसवत् कृतं, सद्यः प्रसूतशिशोः प्रापञ्चिकपरिच्छिन्नज्ञानशून्यत्वात् मायावच्छिन्नोऽपि स्वयं निरवच्छिन्नचिदात्मतया अनन्तात्ममहःफलितत्वं युज्यत एवेत्यर्थः। तथा च श्रीमद्भागवते – "नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः" (म. भाग. 3-31-11) नाथमानः याचमानः, उपतप्यमान इति वा, ऋषिः देवात्मदर्शी (ज्ञानी), सप्तवध्रिः=सप्तबन्धनभूतधातुमान् (श्रीधरी)। अत एव शिशोर्मुखे क्षुधादिबाधाकृतरोदनादन्यत्र सर्वप्ररोचनेषु आनन्दरूपस्य सुन्दरसुहासस्यैव विलसनं सर्वानुभूतप्रचितम्। अपि च शिशोर्निद्रातिशयोऽपि परिपूर्णचिदानन्दरसवत्तासूचनमेव। सुषुप्तेः चिदानन्दांशतया तात्त्विकैरप्यङ्गीकृतत्वात्। यथा यथा च वृद्धिमेति शिशुः, तथा तथा प्रापञ्चिकैर्विषयैः षाड्गुण्येन त्रैगुण्येन च मितज्ञो भिन्नज्ञश्च भवति , सः=तादृशः उपर्युक्तवैशिष्ट्यविलसितः, अन्तर्ब्रह्माण्डसदृशरहोयोगनिलयः =अन्तः अन्तर्भागे, ब्रह्माण्डेन–ब्रह्मणः=सृष्टिकर्तुः विधातुः, अण्डेन=स्वसृष्टेन विश्वं सर्वं गर्भे कृत्वा (यथा च कुक्कुटं गर्भे कृत्वा कुक्कुटाण्डं ) स्थितेन महता अण्डेन=निखिलस्य ज्ञानस्य अस्मिन्नेव अण्डे निक्षिप्तत्वात्। ब्रह्मणः=ज्ञानस्य महतस्सूक्ष्मस्य च, अण्डेन=ज्ञानातीतविधया निक्षिप्तेन वलयाकारस्थानेनेत्यर्थः। यथा च ब्रह्माण्डं विश्वं अगम्यगोचरं तथैव मातृगर्भे आदिपिण्डाण्डमप्यगम्यगोचरम्। उभयोः क्रमेण महतो महीयस्त्वात् अणोरप्यणीयस्त्वाच्च। अमति निस्सरति अस्मात् शिशुः नक्षत्रताराग्रहमण्डलानि चेति अण्डम्। तादृशविश्वात्मक विज्ञानाण्डेन ब्रह्मतत्त्वज्ञानाण्डेन च, सदृशानां=सम्मितानां, रहसां= रहस्यानां रहस्यतत्त्वानामिति यावत्। योगानां=समावेशानां आत्मेन्द्रियमनोबुद्ध्यादियोगानां च, निलयः= निश्शेषतया सच्चिदानन्दात्मनि लयं प्राप्य स्थितिः आवासस्थानम्। प्रयोगशाला –इति नवीन शास्त्रीयाभिप्रायेण वक्तुं शक्यते। तादृशः ते =तव अम्बुजनिभः= "अप एव ससर्जादौ तासु वीर्यमवासृजत्" इत्युक्तविधया ब्रह्माण्डमेव ब्रह्माण्डसदृश इत्यर्थः। कुक्षिस्थ सकल। विश्वस्वरूपा जगन्माता माता इति भावः। अम्बुजनिभः गर्भः इत्यनेन शब्देन कमलगर्भशब्दप्रतीत्या मातुर्गर्भः ब्रह्मैवेति प्रतीयते। एतादृशः ते = तव शिवगर्भः=मङ्गलमयो गर्भः सद्विश्वसन्तानप्रसवेनेति यावत्। शिवगर्भः=शिवलिङ्गार्येणास्मत्पित्राऽस्मन्मातरि समाधत्तः गर्भः, सदाशिवेन शिवायामाधत्तो गर्भः कुमारगणनाथरूपश्च, "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्या शिवात्मकश्च। नः=अस्मभ्यं, क्षेमं =अनिष्टनिवारणपूर्वकं सौख्यं तनोतु=विस्ताररूपेण

अनुगृह्णातु इति भावः ।

अत्रेदमवधेयम् । दम्पत्योरेकैकस्य योगानन्दः द्विधः । स्वात्मानन्दः संभावितेतरानन्दश्च । स्त्रीपुरुषयोर्योगे स्वस्वानन्दपरवशत्वं स्वात्मानन्दः, अस्यां दशायां पुरुषस्य स्वनेत्रनिमीलनादिभिः स्वात्मानन्दपरवशत्वं स्त्रिया दृश्यते । एतादृशदशायां पुरुषस्यानन्दातिशयेन पुरुषसन्तानोत्पत्तिर्भवति। पुरुषानन्दातिशयस्य शुक्रे रजसि च क्रमेण पुरुषस्त्रीकणयोः परस्परयोगानुकूलचैतन्यातिशयप्रेरणात् । एवमेव स्त्रियः नेत्रनिमीलनादिभिः स्वा (स्त्री) ऽऽनन्दपरवशत्वं पुरुषेण संदृश्यते । एतादृशदशायां स्त्रीसन्तानोत्पत्तिर्भवति । अत्र स्त्र्यानन्दातिशयस्य रजसि शुक्रे च क्रमेण स्त्रीकणयोरेव परस्पररयोगानुकूल चैतन्यातिशयप्रेरणात् । एषः स्त्रीपुरुषयोगे शुक्रस्खलनदशायां स्वस्वानन्दकृतसन्तानोत्पत्तिभेदः प्रथमः । यदानन्दातिशयः तद्रजसो वा तच्छुक्रस्य वा (बल) अतिशयः । अतिशयस्यैवा–कर्षकत्वसिद्धेः । स्त्रिय आनन्दातिशये पुरुषशुक्रगतस्त्रीकणाकर्षणात् स्त्रिय उत्पत्तिः । पुरुषस्यानन्दातिशये शुक्रीयपुरुषकणस्यैव अधिकाकर्षकत्वसिद्धेः तत्पुरुषकणः शोणितीयस्त्रीकणमाकर्षति तत्र पुरुष कणाभावात् । तेन पुरुषोत्पत्तिः । अथद्वितीयो भेदः स्त्रीपुरुषयोगे स्त्री पुरुषमेव सर्वाङ्गीणं भावयन्ती स्वानन्दमाक्षिप्य संभावितेतर (पुरुष) आनन्देन परवशा भवति । अस्यां दशायां स्त्रिय आनन्दपरवशत्वेऽपि पुरुषसन्तानस्यैवोत्पत्तिर्भवति । यतः तदा स्वशोणिते स्त्रीकणः पुरुषभावाविष्टतया शुक्रीयपुरुषकणमेवाकर्षति । एवमेव पुरुषः स्त्रियमेव भावयन् स्वानन्दमपक्षिप्य संभावितेतर (स्त्री) आनन्दपरवशो भवति । अस्यां दशायां पुरुषस्यानन्दपरवशत्वेऽपि स्त्रीसन्तानस्यैवोत्पत्तिर्भवति। यतः पुरुषशुक्रीयस्त्रीकणएव स्त्रीभावाविष्टतया शोणितगतं स्त्रीकणमेवाकर्षति । एषः स्त्रीपुरुषयोगे संभावितेतरेतरानन्दकृतः सन्तानोत्पत्तिभेदः द्वितीयः । अथ तयोरन्योन्यप्रेरणया स्वात्मानन्दयोरेवातिशयः तदा पुरुषानन्दातिशये पुरुषस्य स्त्र्यानन्दातिशये स्त्रियश्च उत्पत्ती भवतः ।

अपि चात्र दम्पत्योर्योगे उभयोरेकैकस्य च तत्कालीन सत्त्व रजस्–तमो गुणानां त्रयाणां एकैकस्य च मिश्रणेन अनन्तविधया तारतम्ययोगस्य प्रभावातिशयः परमगम्यः (परं+अगम्यः) परमेण=परमात्मनैव गम्यः।

पूर्वं एकैकस्यानन्दः स्वानन्द-संभावित (इतर) आनन्दभेदेन द्विधा प्रतिपादितः । अधुना तयोः स्वसंभावितस्वात्मानन्दरूपेण तृतीयो भेदः परिगण्यते ।

यदा च दाम्पत्ययोगे पुरुषः स्त्रीतादात्म्येन अनुभूयमानमानन्दं स्वात्मानन्दे संलीय स्वात्मैकानन्दो भवति तदा पुत्र एव जायते । स च सर्वमहान् भवति । एवमेव स्त्री अपि पुरुषतादात्म्येन अनुभूयमानमानन्दं स्वात्मानन्दे संलीय स्वात्मैकानन्दा भवति तदा स्त्री एव जायमाना सर्वमहती भवति । दम्पत्योर्व्यवाये आशुक्रस्खलनं स्व-संभावित-संभावितस्वात्मानन्दानां सत्वरजस्तमोगुणानां व्यस्तसमस्ततया प्रेरणानुगुण्येन अगम्यागण्य–

स्वान्ते सुखस्वास्पदं बहुशः नीतः, चिरं अस्वपं अहो ।

नन्दिनी :– जननि ! ते, अंसालम्बितं =भुजालम्बितं, अंशुकं =वस्त्रं (दशा) आलम्बं =कक्षास्थितौ वा भूमावनुचलने वा स्खालित्यनिवारकं हस्तग्राह्यमाश्रयं , आसीत् = अभूत् । एष एवाऽहं = एतादृश एवाऽहं, तदा=शैशवदशायां , अंसोद्भ्रामितः= भुजाभ्यां भुजयोश्च, उद्भ्रामितः =चक्राद्याकारेण भ्रामितः, रुचिरं = मनोज्ञं यथा, संक्रीडितः=सम्यक्, क्रीडनानि कृतवानित्यर्थः । ततः स्कन्धारूढः =भुजारूढस्सन् जगन्मात्रभिन्नायास्तव स्कन्धप्रदेशस्य विश्वाति शायिसमुन्नततया, सुदूरजगतिं =सुदूरस्थितमपि विश्वं , संप्रेक्ष्य=सम्यक् प्रकर्षेण दृष्ट्वा , संविस्मितः=लौकिकतया महाश्चर्यंगतः । यथा चोपग्रहस्थितः भूमिं तदितरं विश्वं च दृष्ट्वा विस्मितो भवति तथैव विस्मित इत्यर्थः । शिशोरपि मातृकक्षे स्थित्वा नूत्ननूत्नविश्वदर्शने आनन्दातिशयो दृश्यत एव । अत एव शिशवः मातृकक्षस्थितिं नैव वर्जयन्ति । तादृशस्सन्, ते स्वान्ते=हृदये , सुखस्वास्पदं =सुखस्य स्वात्मस्थानं सुखमयस्य (आनन्दमयस्य) स्वस्य सुखमय्याः (आनन्दमय्याः) मातुश्च, आस्पदं =स्थानं स्थितिं वसतिं च, नीतः =प्रापितः, बहुशः =अनेकशः, चिरं=चिरकालं, अस्वपं =निद्रां गतवान् । समाधिप्रायां गाढसुषुप्तिं गतवानहमिति भावः ।

**Nandini :-** जननि =mother !, ते अंसालम्बितं अंशुकं =the sari-edge that hung from over thy shoulder, आलंबं आसीत् =became my hold-piece for raising myself up एष एवाहं =that same I, अंसोद्भ्रामितः=was made to rotate in half- rotations about thy shoulders, तदा =then, सुचिरं संक्रीडितः =I was made to play thus for a long time, स्कन्धारूढः=perching on thy shoulders, इतः सुदूरजगतिम् =from this (world) to the farthest world (the shoulders of the Divine Mother have such a wide all -embracing reach), सम्प्रेक्षितः=I had seen it clearly, संविस्मितः=I was surprised (too), ते स्वान्ते =in your heart, बहुशः=many a time, अस्वपम् =I had slept, तथा =in the same way, चिरं सुखस्वास्पदं नीतः=I was transported, for very long durations , to my native joyous state.

O my mother! The edge of the saree hanging over thy shoulder had become my stead while I was walking or while I was sitting astride on thy waist - zone. 'This is called 'amsuka' - amusbhih kasate iti - as it shines with subtle threads. It shines with the subtle rays of the sun. Thus the word अंशुक is a synonym of illumination –a symbol of knowledge. "amsubhih kayati" (kai sabde) It sounds with threads woven tightly in warp and woof. It sounds like the veena strings. Thus the word amsuka is a synonym of nadabrahman. In other words, Mother's amsuka, a symbol of wis-

dom and nada. is here expressed as the 'support'. I was in my child-hood -days made sometimes to rest and sometimes to play on thy shoulders and I was transported to ecstatic heights many a time. I pray thee mother to bless me with such unalloyed happiness now too, in my advanced age.

52. कक्षे रक्षैकदीक्षे जननि ! तव सुतोऽहं निविष्टस्समन्तात्
साक्षी विश्वं व्यपश्यं त्वयि खलु निरतं कर्मसु व्यापृतायाम् ।
तुष्टः पुष्टो वरिष्ठस्सकुशलवचनस्सर्वमप्यन्वकार्षं
त्वामुन्मुच्याद्य घोरे तमसि निपतितस्सत्वरं तारयैनम् ॥

**अन्व** :– जननि ! सुतः अहं रक्षैकदीक्षे तव कक्षे निविष्टः साक्षी सन् विश्वं समन्तात् व्यपश्यम् । त्वयि निरतं कर्मसु व्यापृतायां तुष्टः पुष्टः वरिष्ठः सकुशलवचनः सर्वम् अपि अन्वकार्षं खलु । त्वाम् उन्मुच्य अद्य घोरे तमसि निपतितः अस्मि । एनं सत्वरं तारय ।

**नन्दिनी** :– जननि ! सुतः =ते सुतः, तव, अहं,रक्षैकदीक्षे =रक्षा एव एकदीक्षाव्रतं यस्मिन् तस्मिन् , कक्षे=बाहुमूले वाहुमूलकटिमध्यप्रदेशे इति यावत् , निविष्टः =निवेशितः उपविष्ट इति यावत् । साक्षी =अकर्ता सन्, द्रष्टा इव उदासीनस्सन् , बोद्धा इव जीवेश्वरानुगत सर्वानुसन्धातृचैतन्यवानिव स्थितः , विश्वं =जगत् सर्वं, अपश्यं =अद्राक्षम् । मातुः जगन्मातुः कक्षप्रवेशः विश्वातीत इति कृत्वा तत्रस्थोऽहं विश्वसाक्षी अभूवमिति भावः । अथ त्वयि निरतं =निश्शेषेण रतिः आसक्तिः यथा भवति तथा संलग्नमनस्का इति यावत् । कर्मसु= गैहिकादिकर्मसु लैकिकेषु पाकादिषु, पारमार्थिकेषु व्रतादिषु, आध्यात्मिकेषु ललितासहस्रनामादिपारायणजपतपःप्रभृतिषु कर्मसु इति भावः । व्यापृतायां =व्यापारवत्यां निर्वहणप्रयत्नशीलवत्यां सत्यां भवत्यां । तुष्टः=कक्षे तिष्ठन्नेव पश्यन् तुष्टः नूत्ननूत्न लौकिकादि विषयज्ञानेन तुष्ट इति यावत् । पुष्टः=क्रमात् तस्मिन् ज्ञाने सुदृढः, वरिष्ठः=तस्मिन् ज्ञाने प्रावीण्यप्राप्त्या सर्वश्रेष्ठः । अत एव सकुशलवचनः = सुनिपुणसंभाषणः वचोनिपुण इति यावत्। सर्वमपि=मात्रा कृतं सर्वं ततः अन्यकृतं सर्वमपि, अन्वकार्षं= अनुकरणेन सर्वमकरवम् अनुकरणरूपत्त्वात् शिशोः क्रिया कालापस्य मातुरेव प्रथमानुकार्यत्वात् च । अद्य =इदानीं, त्वां =भवतीं जननीं । उन्मुच्य =मुक्त्वा , घोरे तमसि= भयानके अन्धकारे, निपतितः खलु । अत्रानुनये खलु इत्यव्ययम् । एवमेतादृशमेतं मां , सत्वरं = अनालस्यं, तारय=तीरं प्रापय उद्धर इति भावः ।

**Nandini :-** जननि =mother !, सुतोऽहं =I, your son, रक्षैकदीक्षे तव कक्षे =on your waist–perch which had taken the vow of protecting (me), निविष्टः=sat on it, साक्षी =as a witness, partaking neither as a doer nor as an experiencer, विश्वं व्यपश्यम् =I had seen all the world, त्वयि निरतं

कर्मसु व्यापृतायां =while you were ceaselessly engaged either in domestic chores or in performing vratas or in meditating, तुष्टः=feeling happy. because of becoming aware of novel things about the world. पुष्टः=I became strong gradually owing to the abovesaid knowledge, वरिष्ठः= I had acquired skills and became famous, सकुशलवचनः= becoming a good conversationalist, सर्वमपि अन्वकार्षं = I had learnt all that was done by mother and others through imitation, किंतु= but, अद्य= now,today त्वामुन्मुच्य= leaving you , घोरे तमसि निपतितः खलु = I had fallen into the horrible darkness of ignorance, एनं तारय= please lift me up from this abysmal dark hole.

O my mother ! throughout my childhood I did not leave my cozy seat on thy waist. You could not put me down because I used to weep as soon as you had put me down on the ground. You used to do all your domestic chores, Vratas and meditations with me perched on thy waist.

There were two reasons for my sticking to thy waist . One was that it gave me unconditional protection; the second was that I used to perform all those spiritual activities that you had done as a witness. I used to do as you did ; I used to talk as you talked; I used to feel as you felt. Thus I was in Thee then.

But now I have fallen into the horrible darkness of ignorance because I have left that safe perch of protection. Mother ! Take me back on to that perch of protection and save me from the onslaught of ignorance.

**53. नमस्ते बाहुभ्यां मम जननि ! सङ्कल्पलतिका–**
**सुदीर्घाभ्यां, नित्यं चपलशिशुसंमोहनविधौ ।**
**सुनिद्रानन्दाब्धेर्ललिततलहरीभ्यां, कमलित–**
**स्वपुत्राङ्गाभ्यां त्वत्करसरसिजस्पर्शशतकैः ॥**

अन्व :– मम जननि ! सङ्कल्पलतिकासुदीर्घाभ्यां नित्यं चपलशिशुसंमोहनविधौ सुनिद्रानन्दाब्धेः ललिततलहरीभ्यां त्वत्करसरसिजस्पर्शशतकैः कमलितस्वपुत्राङ्गाभ्यां ते बाहुभ्यां नमः ।

नन्दिनी :– जननि ! मम सङ्कल्पलतिकासुदीर्घाभ्यां =सङ्कल्पा एव लतिकाः, ता इव सुदिर्घाभ्यां =सुष्ठु सुन्दरं दीर्घाभ्यां =आयताभ्यां, नित्यं =सदा, चपलशिशुसंमोहनविधौ –चपलानां =चञ्चलानां शिशूनां, संमोहनं =सम्यक्स्वात्मन्येव मातर्येव, मोहनं =वशीकरणं,

तद्विधौ निद्रापरवशीकरणविधावपि, मातृबाहुस्पर्शमात्रेण रुदनादिपरवशस्यापि शिशोः सत्वरप्रशान्तिपूर्वकं मात्रानन्दपरवीशीभावः सर्वप्रत्यक्षसिद्ध एव । तादृशशिशुपरवशीकरणविधौ, सुनिद्रानन्दाब्धेः = गाढनिद्राकृतानन्दरससमुद्रस्य, ललितलहरीभ्यां =सुन्दरप्रशान्तडोलावद्दीर्घ (तरङ्ग) लहरीरूपाभ्यां, त्वत्करसरसिजस्पर्शशतकैः =तव करकमलयोः अनन्तस्पर्शनैः, कमलितस्वपुत्राङ्गभ्यां =कमलानीवाचरितानि कमलितानि स्पर्शमात्रेण हर्षोल्लासविकसितानि,परं साक्षात् सद्योविकसितकमलवत् सुन्दरसुकुमाराणीति भावः । स्वस्याः पुत्राणां अङ्गानि ययोः ताभ्यामिति बहुव्रीहिः । मातृकरकमलस्पर्शनैः स्वपुत्राङ्गानि सद्योविकसितकमलकोरकाणीव सुन्दरसुकुमारलोहितमनोज्ञानि कृतानीति भावः । तादृशाभ्यां ते =तव बहुभ्यां , नमः=प्रणामः। सर्वोत्कृष्टत्वसर्ववशीकरणशक्तिमत्वसंभावनमिति भावः ।

**Nandini :-** मम जननि ! = O my mother !, संकल्पलतिका सुदीर्घाभ्यां =very long as the desire-creepers of your sons and devotees, नित्यं =always, चपलशिशुसंमोहनविधौ = making the fickle-minded children feel fascinated, सुनिद्रानन्दाब्धेः= issuing out of the ocean of joy of deep sleep, ललितलहरीभ्यां= like the beautiful waves, त्वत्करसरसिजस्पर्शशतकैः=with the innumerable tender touches of your lotus-hands, कमलितस्वपुत्रांगाभ्यां= (with these tender enlivening touches ) all the organs of your sons bloom into many a lotus with innumerable petals, ते बाहुभ्यां नमः=salutations to those hands of thine.

Mother ! your hands are long as the desire-creepers of your devotee sons, i.e. your hands have extended themselves in proportion to the desires of your sons. (In Hindi we have a saying "Bachane ke haath bade hote hai" - protecting hands are long and strong.) They make us your sons, heave on the waves of the ocean of joy of sleep. Your lotus-hands with their tender touch, make all the organs of your sons bloom into many-petalled lotuses. I salute to those thy hands.

54. **कराभ्यामानन्दामृतसरसिजाभ्यां तव शिशोः**
**तनौ बाल्यं यावत् किमपि समभूल्लालितमहो ।**
**यदाभोगप्रोद्यन्निखिलरसचैतन्यलहरी—**
**परीवाहस्रोतस्सरणिरभवन्मे तनुरिह ॥**

अन्व :— आनन्दाऽमृतसरसिजाभ्यां तव कराभ्यां तव शिशोः तनौ बाल्यं यावत्

किमपि लालितं अभूत् अहो ! ततः इह मे तनुः यदाभोगप्रोद्यन्निखिलरसचैतन्यलहरी परीवाहस्रोतस्सरणिः अभवत्।

नन्दिनी :– आनन्दाऽमृतसरसिजाभ्यां =आनन्दामृतसरोजातकमलाभ्यां, तव कराभ्यां= हस्ताभ्यां, तव, शिशोः=पुत्रस्य, तनौ= देहे, बाल्यं यावत् =बाल्यं सर्वं व्याप्य, किमपि लालितं =अनिर्वचनीयतया आप्यायितं , समभूत् =सम्यगभूत्, ततः, मे, तनुः = देहः, यदाभोगप्रोद्यन्निखिलरसचैतन्यलहरीपरीवाहस्रोतस्सरणिः–यदाप्यायनस्य आभोगेन =पूर्णानु – भूत्या प्रकर्षेण आविर्भवन्तीनां समस्तानन्दात्मकरसाभिन्नचैतन्यलहरीणां अतिशयितरस प्रवाहमार्गः अभवत् = संजात इत्यर्थः । मातृलालनेनैव उद्वेल्लितनिखिलानन्दरसचैतन्य परीवाहसरणिरेव मे तनुरभूदित्यनेन मातृवात्सल्यचैतन्यानन्दस्य अनन्तत्वं व्यज्यते ।

**Nandini :-** आनन्दामृतसरसिजाभ्यां =Lotuses that are born of the ambrosial stream of thy joy, तव कराभ्यां =your palms, तव शिशोः तनौ =on the body of your child, बाल्यं यावत्=throughout the childhood, किमपि =indescribable, लालितमभूत् =fondled, इह=here,मे तनुः=my body, यदाभोग–प्रोद्यन्निखिलरसचैतन्यलहरी अभवत् = it has made waves of wisdom-joy to gush up.

O mother ! your body is an ambrosial brook. Your hands are the full- blown lotuses in it. Those lotus-hands of thine had fondled me throughout my childhood and made me feel indescribable joy. That ecstatic experience had made the waves of wisdom -joy to gush up. May that joy inundate me now too, in my old age.

**55. सदा पञ्चाक्षर्या मननमनुसंवर्तनविधिं**
**चरन्ती ताराच्छस्फटिकमणिमाला जपपरा ।**
**शिवश्रीनिश्रेणिस्तव जननि ! हस्ताङ्गुलिषु या**
**नयत्वस्मान् श्रेयश्शिवमभयमानन्दनिलयम् ॥**

**अन्व** :– जननि ! तव हस्ताङ्गुलिषु सदा पञ्चाक्षर्याः मननं अनु संवर्तनविधिं चरन्ती जपपरा ताराच्छस्फटिकमणिमाला शिवश्रीनिश्रेणिः या आसीत् (सा) अस्मान् अभवं आनन्दनिलयं श्रेयः शिवं नयतु ।

**नन्दिनी** :– जननि ! तव हस्ताङ्गुलिषु =कराङ्गुलिषु, पञ्चाक्षर्याः=पञ्चाक्षरीमहामन्त्र (विद्यायाः) स्य, मननम् अनु =चिन्तनमनुसृत्य, सदा =नित्यं, संवर्तनविधिं चरन्ती=सम्यक् जपविधिरूपेण वर्तुलतया परिभ्रमन्ती, जपपरा =जपध्यानतत्परा जपध्यानैकलक्ष्या इत्यर्थः।

ताराच्छस्फटिकमणिमाला= नक्षत्रवत् निर्मलस्फटिकमणिभिर्ग्रथिता माला, मोक्षार्थिभिर्जपाय स्फटिकमणिमालैवावलम्ब्यते । शिवश्रीनिश्रेणिः—शिवस्य =सदाशिवस्य शिवलिङ्गार्याभिन्नस्य, श्रियः =प्रणतबहुफलदायिन्याः संपदः, निश्रेणिः= निश्चयेन श्रयन्ति उन्नतस्थानमनयेति निश्रेणिः अत्युन्नतपदस्याऽधिरोहिणी सती या आसीत् सा स्फटिकमणिजपमाला इत्यध्याहार्यं यत्तदोर्नित्यसंबन्धात् । अस्मान् =नः, अभवं =जन्मरहितं अनादिमित्यर्थः । आनन्दनिलयं =आनन्दात्मकं निलयं =आवासं, श्रेयश्शिवं =श्रेयोरूपं पारमार्थिकमोक्षसुखरूपं, शिवं =सदाशिवपरब्रह्मस्वरूपं , नयतु=प्रापयतु । तादृशस्फटिकमणिमालया त्वच्छिवस्वरूप प्राप्तिरवितर्कितदृढनिश्चिता एवेति कृत्वा अस्माकं शिवस्वरूपप्राप्तिः संप्रार्थ्यते ।

**Nandini :-** जननि =Mother , तव हस्ताङ्गुलिषु =On your fingers,पञ्चाक्षर्याः मननं अनु= after the meditation on the purport of the Panchakshari mantra, संवर्तनविधौ चरन्ती= moving on the beads of the japamala while performing japa, जपपरा= itself, as it were meditating, या ताराच्छस्फटिकमणिमाला= that japamala made of pure star-like crystal beads, शिवश्रीनिश्श्रेणिः= it is like a ladder for acquiring the infinite riches (Astasiddhi) of Siva, अस्मान्= us, अभवं आनन्दनिलयं= it has become the beginningless joy-abode, श्रेयश्शिवं नयतु =May it lead us to the Ultimate Good (Siva).

Mother ! you used to move your fingers on the crystal beads of your japamala meditating on Siva (Sivalingarya, thy husband). There used to be perfect tuning between the movement of the japamala and the meditation on the mantraksharamala. The japamala was like a ladder making your mind ascend on to the pinnacles of joy. You, by this ladder, had attained Siva. May this thy japamala lead us on to those peaks of joy.

56. **कलगीतिस्फुटपञ्चमस्वरसुधासंमुग्धकैशोरकः**
**ललितानामसहस्रगानलहरीलालित्यचिद्द्योतनः ।**
**शिवलीलारसरागरञ्जितगलस्ते मातरव्यादिमं**
**कमनीयोज्ज्वलदिव्यतावकसुधीशक्तिं प्रदायादरात् ॥**

**अन्व :–** मातः ! कलगीतिस्फुटपञ्चमस्वरसुधासंमुग्धकैशोरकः ललितानामसहस्रगानलहरी लालित्यचिद्द्योतनः ते शिवलीलारसरागरञ्जितगलः आदरात् कमनीयोज्ज्वलदिव्यतावकसुधीशक्तिं प्रदाय इमं अव्यात् ।

**नन्दिनी :–** मातः ! कलगीतिस्फुटपञ्चमस्वरसुधासंमुग्धकैशोरकः= अव्यक्तमधुरया गीत्या

स्पष्टस्य पञ्चमस्वरस्य कोकिलस्वरस्येति यावत् । सुधया =अमृतानन्दरसेन, संमुग्धं =संपूर्णतया परवशीकृतं , कैशोरं =बाल्यं यस्य सः । ललितानामसहस्रगानलहरीलालित्य चिद्द्योतनः=ललितासहस्रनामस्तोत्रगानस्य लहरीभिः ललितायाः= ललिताम्बयाः तत्त्वं =आनन्द सुन्दरं तत्त्वमित्यर्थः । तस्य लालित्यस्य, चितः=चैतन्यज्ञानस्वरूपस्य च, द्योतनः =प्रकाशकः इति यावत् । तादृशः ते=तव, शिवलीलारसरागरञ्जितगलः—शिवस्य =सदाशिवस्य शिवलिङ्गार्यस्य च लीलारसेन रागेण सदाशिवैक्यरसरक्तेनेत्यर्थः शिवलिङ्गार्यस्य तव भर्तुः शृङ्गाररसरक्तेनेत्यपि चार्थः । तादृशः गलः=कण्ठः, कमनीयोज्ज्वलदिव्यतावकसुधीशक्तिं =मनोहरामुज्ज्वलां = दिव्यां त्वदीयां सुधीशक्तिं =शोभनायाः धारणसमर्थायाः बुद्धेः शक्तिं=सामर्थ्यं बलं तावकचिच्छक्तिस्वरूपमिति चार्थः । इच्छाक्रियाशक्तिमूलां ज्ञानशक्तिमितिभावः। आदरात् =प्रेम्णा, प्रदाय=प्रकर्षेण प्रभूतं दत्त्वा इमं मां अव्यात् =रक्षतु ।

**Nandini :-** मातः=Mother !, कलगीतिस्फुटपञ्चमस्वरसुधासंमुग्धकैशोरकः=my childhood was blessed with thy inimitable sweet songs and cuckoo-like nectar-notes, ललितानामसहस्रगानलहरीलालित्यचिद्द्योतनः=it reflected the subtle wisdom of the Divine Mother being activated by the waves of the myriad names of the Divine Mother, ते =your, शिवलीलारसरागरंजितगलः=your full-throated voice was attuned to the ecstasy gushing out of the Siva Lilas, कमनीयोज्ज्वलदिव्यतावकसुधी शक्तिं प्रदाय इमं अव्यात् =protect me, this, your child, by granting me your resplendent, divine intellect.

Mother ! you used to sing the myriad names of the Divine Mother and Sivalilas too. Your voice then used to vie with that of a cuckoo. Our childhood was completely drenched in that nectar-like sweet music. It used to reflect soul - joy. Your throat was made sweeter by your singing of Sivalilas in an engrossed state. May your full-throated voice grace me with your resplendent intellect and protect me on all sides.

57. मुखेनैनं स्वीयामलहृदयपङ्केरुहरस-
स्फुरन्मञ्जुश्रीवागमृतभरसौम्येन नितराम् ।
समाचुम्बन्त्यार्यां सुवचनसुशिक्षां जननि ! मे
अदा इत्यद्यापि प्रकटय पुनस्तां मयि कृपाम् ॥

अन्व :— जननि ! स्वीयामलहृदयपङ्केरुहरसस्फुरन्मञ्जुश्रीवागमृतभरसौम्येन मुखेन एनं नितरां समाचुम्बन्ती आर्यां सुवचनसुशिक्षां अदाः इति अद्यापि पुनः तां कृपां प्रकटय ।

नन्दिनी :— जननि ! स्वीयामलहृदयपङ्केरुहरसस्फुरन्मञ्जुश्रीवागमृतभरसौम्येन

=स्वकीयस्वच्छहृदयकमलमकरन्दरसेन सह विकसन्तीनां मनोज्ञसंपद्युतानां वाचां अमृतेन पूर्णं अत एव सौम्यं च = शान्तं सोमस्य चन्द्रस्य सादृश्येन संबन्धि, चन्द्रसदृशमित्यर्थः । उमया सहितं सोमं शिवस्य रूपं तस्य अर्धार्धरूपेण उमामहेश्वरात्मकेनेत्यर्थः । ओमा =ॐकारेण सहितं सौमं तस्य सर्वात्मना संबन्धि ओंरस्वरूपमित्यर्थः। तेन =एतादृशेन मुखेन, एनं =एतं मां, नितरां = अतिशयेन , समाचुम्बन्ती=सम्यक्, आसमन्तात् चुम्बन्ती । मे=मह्यं, आर्यां =पूज्यां सर्वाश्रयणीयां , सुवचनसुशिक्षां =सुभाषितसुशिक्षां सुभाषितविधान प्रबोधमित्यर्थः । अदाः =अयच्छः, इति =इति हेतोः, अद्याऽपि =अधुनापि, तां कृपां =तादृशीं सुभाषितसुशिक्षाप्रदानरूपां दयां, पुनः=इतः परमपि, प्रकटय=प्रकाशय, वैषयिकव्यासतया मया दुर्भाषितमेवाभ्यस्तं दृढं चेदानीं तत् । अतः तत्परिमार्जनाय त्वत्तः पुनस्सौम्येन मुखेन सुभाषितसुशिक्षा अत्यावश्यकीति तदनुप्रकाशनाय प्रार्थयामीति भावः ।

**Nandini :-** जननि = Mother !, स्वीयामलहृदयपंकेरुहरसस्फुरन्मञ्जु श्रीवागमृतभर सौम्येन मुखेन = with your face placid, gentle and soft like the moon, having been filled up with pleasing ambrosial words mixed with the honey of your heart-lotus, एनं मे =this, me, नितरां =verymuch, समाचुम्बन्ती =caressing me all over, मे =for me, आर्यां =capable of giving refuge to one and all; worthy of worship, सुवचनसुशिक्षां अदाः=trained me well in talking good and meanigful words, इति =because of that, अद्यापि =now too, तां कृपां पुनः प्रकटय =kindly shower that mercy again on me.

Mother ! your heart is pure; it is soft like the lotus; it is full of the honey of your mercy. It is replete with the pleasing bee-hum of Omkaranada. Made placid and happy by that holy vibration-nectar, your voice beamed out Omkara followed by many letters, words and sentences expressing the form of the universe created by the Word-Meaning Protoforms of Umamaheswara, Lakshminarayana and Vanihiranyagrabha. You had made me learn all these good and meaningful words in a soft caressing way. Therefore throughout my childhood, nobody was pained by my words; all were happy listening to my words.

But now, as you are away from me, bad words have gained entrance into me. I am paining not only others, but myself too. If we wish to talk good, we have to learn about it first. Mother ! the good knowledge that you gave me has been lost and hence the desire to speak and think about it is also lost. Make me again

knowledgeable about good and return to me O mother !, my good sense to think, know and do good alone.

58. शिरो मे जिघ्रन्ती धियि कलुषभावानिव मुहु–
व्यर्पोहन्ती मुक्ताभरणकिरणैस्सान्द्रललितैः।
समुन्मीलन्नेत्रभ्रमरयुतचाम्पेयसुमन–
स्समोदारा धीराऽवतु जननि ! नासा तव शिवा ॥

अन्व :– जननि ! मम धियि कलुषभावान् व्यपोहन्ती इव मे शिरः मुहुः जिघ्रन्ती सान्द्रललितैः मुक्ताभरणकिरणैः समुन्मीलन्नेत्रभ्रमरयुतचाम्पेयसुमनस्समोदारा धीरा तव शिवा नासा अस्मान् अवतु ।

नन्दिनी :– जननि! मम धियि =बुद्धौ , कलुषभावान् =पापभावनाः, व्यपोहन्ती इव =निवारयन्ती इव, मे शिरः=मस्तकं, जिघ्रन्ती =आघ्राणं कुर्वन्ती, सान्द्रललितैः= अविरलेन स्निग्धसुन्दरैः मुक्ताभरणकिरणैः =मौक्तिकनिर्मितनासाभरणकान्तिभिः, समुन्मीलन्नेत्र–भ्रमरयुतचाम्पेयसुमनस्समोदारा= सम्यगुन्मीलिते नेत्रे एव भ्रमरौ ताभ्यां युतं =युक्तं, चाम्पेयसुमनस् =चाम्पेयकुसुमं, तेन समः =सदृशः समानः, उदारः=उत् इयर्ति (औन्नत्यं , गच्छति) इति उदारः=समुन्नतदीर्घ इति यावत् । तद्वती – ऋजुतया समुन्नता इत्यर्थः। अत एव धीरा, तव शिवा=मङ्गलमयी, नासा=नासिका, अस्मान् सर्वान् अवतु =रक्षतु । अत्र चांपेयकुसुम भ्रमरयोस्सहजविरोधमपहृत्य स्वतपःफलतया मातृनासानेत्ररूपेण सहसंगतिः आन्ध्रमहाकविना भट्टमूर्तिमहाशयेन स्वीय वसुचरित्रे "नानासूनेत्यादि पद्येन वर्णिता समनुसन्धेया " ।

**Nandini :-** जननि ! =mother !, मम धियि =in my mind, कलुषभावान् =sinful thoughts, व्यपोहन्ती इव=as though removing, मे शिरः=my head, मुहुः= time and again, जिघ्रन्ती =smelling, सान्द्रललितैः मुक्ताभरणकिरणैः=with the myriad soft bright rays emanating from the pearl-studded nose-ornament. समुन्मीलन्नेत्रभ्रमरयुतचांपेयसुमनस्समोदारा =your wide-open eyes are like two bees sitting on the champaka flower of your beautiful nose. (champaka flower is not approached by the bees. But here a bee does so reminding us of the poem of Nandi Timmana). धीरा =the shape of your nose expressed boldness, तव शिवा नासा =your auspicious nose, अस्मान् अवतु =may it protect us !

Mother ! with extreme motherly affection you were wont to take me close to you and smell my head. May be with this pretext, you were bringing out all my sinful thoughts and banishing them for ever. May that champaka - like nose of thine protect us !

59. ललाटश्चन्द्रार्धस्त्वरुणतिलकालङ्कृतिभरः
शरीरं हारिद्रं कनकलतिकासौम्यललितम् ।
भ्रुवौ चापो मौर्वी भ्रमरनयने, चम्पकशर-
स्सुनासैषा मूर्तिस्तव शिवमनोज्ञा समवतात् ॥

अन्व :- मातः = तव अरुणतिलकालङ्कृतिभरः ललाटः चन्द्राऽर्धः। हारिद्रं तव शरीरं कनकलतिकासौम्यललितम् । तव भ्रुवौ चापः । तव भ्रमरनयने मौर्वी। तव सुनासा चम्पकशरः । एषा शिवमनोज्ञा तव मूर्तिः अस्मान् अवतात् ।

नन्दिनी :- मातः, अरुणतिलकालङ्कृतिभरः= अरुणकुङ्कुमतिलकालङ्कारं (बिभर्तीति) विभ्रन् पूर्णशोभान्वितः, तव ललाटः =फालभागः, चन्द्रार्धः= चन्द्रस्य अर्धभागः तत्सदृशः चकास्तीत्यर्थः । एवमग्रेऽपि । हारिद्रं =सौमङ्गल्यहरिद्रालेपनेन हरिद्रावर्णं तव शरीरं कनकलतिकासौम्यललितं =सुवर्णलतिकेव सात्त्विकसुन्दरं चन्द्रचन्द्रिकासुन्दरं उमामहेशसुन्दरं ॐकारसुदरं च चकास्तीत्यर्थः । एतेन हारिद्रलेपनात्पूर्वमेव सहजतया कनकवल्लीसौम्यसुन्दरं मातुः शरीरमित्युक्तं भवति । भ्रुवौ चापः =धनुः । तत्सदृशौ चकास्तः । सुनासा=तव शोभना नासिका, चम्पकशरः=चम्पकपुष्पात्मकः दीर्घोन्नतं बाणरूपं पुष्पम् । एवं शिवमनोज्ञा= शिवा=गङ्गला, मनोज्ञा=मनोहरा , शिवलिङ्गार्यमनोहारिणी च, तव एषा =उपर्युक्तैषा मूर्तिः= समग्राकृतिः, अस्मान् , समवतात् =सम्यक् निराबाधं रक्षतु इति भावः । अत्र मौर्वीभ्रमरनयने चम्पकशरस्सुनासा "इत्यनेन आन्ध्रप्रबन्धमहाकवेः भट्टुमूर्तेः स्वप्रबन्धे वसुचरित्रे गिरिकानायिकायाः नेत्रनासावर्णनमनुस्मर्तव्यम् । तत्र भट्टुमूर्तिना "चम्पकपुष्पभ्रमरयोस्सहजवैरनिवारणाय तपःकरणं तत्फलतया नायिकानेत्रनासारूपेण सहयोगस्नेहप्राप्तिसंपादनमभ्यूहितम् । अत्र तद् ध्वनितम् । (नानास्न वितान ....... लिर्वंकलन्" इति पद्यस्वरूपम् ।)

**Nandini :-** मातः=Mother !, अरुणतिलकालंकृतिभरः=made beautiful by the red tilaka dot, तव ललाटः=your brow, चन्द्रार्धः=is comparable to the half-moon, हारिद्रं शरीरं=your body with its bright yellow hue, कनकलतिकासौम्यललितम् =it is serene and beautiful like a golden creeper, भ्रुवौ =your eyebrows, चापः= are like a bow, भ्रमरनयने मौर्वी = your bee-like eyes are like the string tied to the bow, सुनासा = your beautiful nose, चम्पकशरः = the champaka flower used as an arrow शिवमनोज्ञा= good and beautiful, एषा तव मूर्तिः = this your form, अस्मान् समवतात् = may it protect us !

Mother! Adorned by the red Kumkuma dot, your brow is like a half-moon; your yellow-hued body is like a golden creeper- it is

beautiful and serene: it is as such personified Omkara(soumya - Oma sahavartata iti soumah, tatsambandhi); your eye-brows are the bow; your bee- like eyes form the string for it ; your nose is like the champaka-flower arrow. May this your good and beautiful form protect us ever !

60. रुचीनां वैचित्र्यं ननु जगति ते मातरखिलं
रसैकास्वाद्यं सत् परिणमति वाक्पाकसरणौ ।
यदास्वादस्फूर्त्या वयमिह सुतास्ते दृढतमाः
चिदानन्दैकात्मत्रुटितजनिदोषाश्शिवतमाः ॥

**अन्व** :– मातः, जगति अखिलं रुचीनां वैचित्र्यं ते वाक्पाकसरणौ रसैकास्वाद्यं सत् परिणमति । यदास्वादसफूर्त्या इह ते सुताः वयं दृढतमाः चिदानन्दैकात्मत्रुटितजनिदोषाः शिवतमाश्च भूयाम ।

**नन्दिनी** :– मातः ! जगति=लोके, अखिलं=समस्तं, रुचीनां =पाके षण्णां,सारस्वते नवानां रसानन्दानामित्यर्थः । एतेषामाह्लादजनकानामभिरुचीनां , वैचित्र्यं =एकैकतया संमिश्रणेन च अद्भुततया संभाव्यमानं नानावर्णरसरूपमिति यावत् । ते =तव, वाक्पाकसरणौ =वाक्सरणौ, पाकसरणावपि वचःप्रयोगकौशल्ये पाकप्रयोगकौशल्ये चेत्यर्थः । रसैकास्वाद्यं सत् परिणमति =परिणामं गच्छति । पार्यन्तिकतया परमानन्दैकरसरूपेणस्वाद्यमनुभाव्यं सत् परिणमतीति भावः । यदास्वादस्फूर्त्या =यत्परमानन्दैकरसानुभवजनितेन विलक्षणचैतन्येन (संचलनेन) इह=अत्र ते सुताः =पुत्राः, वयं दृढतमाः सर्वेषु अत्यन्तं बलिष्ठाः, सर्वोत्तमास्वाद्यपाकरसास्वादनेनेति यावत् । चिदानन्दैकात्मभावेन त्रुटितः =विच्छिन्नः, जनिदोषः =पापसंभाव्यपुनःपुनर्जननकृतो दोषः येषां ते तथा भूताः । तव शान्तैकवाग्रसास्वादेनेति यावत्। शिवतमाः =परमोत्कृष्टशिवात्मानः सदाशिवस्वरूपाः अभूम ।

**Nandini :-** मातः=Mother !, जगति= in this world,अखिलं = all , रुचीनां वैचित्र्यम् = of the six tastes and of the nine sentiments (rasas) in literature, and their variegated nature arising out of their various permutations and combinations,ते वाक् पाकसरणौ = in your art of conversation and in your art of cuisine, रसैकास्वाद्यं सत् परिणमति (ननु)= all of them result at the end in producing the ultimate soul- joy, यदास्वादस्फूर्त्या= while experiencing that soul-joy the superconsciousness that is felt, इह= here ,ते सुताः=your sons, दृढतमाः=very strong people, चिदानन्दैकात्मत्रुटितजनिदोषाः= having got rid of the compulsion of being

born again and again with the aid of that ecstatic experience, वयं शिवतमाः अभूम = we have become the greatest Sivatmas.

Mother ! The art of your conversation and of cooking were both wonderful. These two, along with the various permutations and combinations of the six tastes pertaining to the tongue, and the nine rasas of literature had always resulted in producing in us the Ultimate soul - joy. With that ecstatic experience, we , your sons, had not only become strong in body, but had got rid of the cycle of rebirths and become the greatest Sivatmas.

**61. रसोद्वेलाः पत्यौ, करुणितरसार्द्राः मयि शिशौ,**
**ज्वलज्ज्वालोत्तालाः कलुषितमनोवृत्तिषु शुचेः, ।**
**सुधांशुश्रीदीर्घास्सुकृतिषु चिदालोकसुखदाः**
**कटाक्षा भूयासुर्मम जननि ते नः श्रुतितताः ॥**

**अन्व :–** मम जननि ! पत्यौ रसोद्वेलाः, मयि शिशौ करुणितरसार्द्राः, कलुषितमनोवृत्तिषु शुचेः ज्वलज्ज्वालोत्तालाः । सुकृतिषु सुधांशुश्रीदीर्घाः, श्रुतितताः, तव कटाक्षाः नः चिदालोकसुखदाः भूयासुः ।

**नन्दिनी :–** मम जननि ! तव कटाक्षाः =अपाङ्गवीक्षणानि, पत्यौ=तव पतिविषये, रसोद्वेलाः=शृङ्गाररसेन वेलामतिक्रान्ताः भवन्ति । एवमग्रेपि भवन्तीत्यध्याहारः । ते एव कटाक्षाः। शिशौ =तव शिशौ मयि, करुणितरसार्द्राः–करुणिताः= मदेकशरण्य इति करुणापूरिताः रसार्द्राश्च = (कनिष्ठः) पुत्र इति वात्सल्यरससिक्ताश्च । अविदितलौकिकालौकिकविषय इति करुणामयाः शिशुरिति वात्सल्यरसात्पुताश्च भवन्तीति भावः । ते एव कटाक्षाः, कलुषितमनोवृत्तिषु, कलुषिता =दुर्भावनैः कालुष्यमुपगताः, मनोवृत्तयः=मनोव्यापाराः येषां तेषु विषये, ज्वलज्ज्वालोत्तालाः= ज्वलन्तीभिः ज्वालाभिः= अग्निशिखाभिः, उत्तालाः= अत्युन्नततालवृक्षवत् प्रचण्डोन्नतदीर्घाः भवन्ति । सुकृतिषु =शोभनकार्यकर्तृषु पुण्यात्मकेषु च विषये, सुधांशुश्रीदीर्घाः = चन्द्रकिरणशीतकान्तिसंपदा लम्बाः भवन्ति । श्रुतितताः= आकर्णान्तविश्रान्ताः वैदिकतत्त्वदर्शिनश्च, ते =तव, कटाक्षाः= अपाङ्गदृष्टयः पूर्ववर्णिताः, नः= अस्मभ्यं, चिदालोकसुखदाः= ज्ञानानन्दतेजोदर्शनानुभवसुखदायिन्यः। भूयासुः=भवन्तु ।

**Nandini :-** मम जननि =my mother ! तव कटाक्षाः=your looks, पत्यौ =in the case of your husband, रसोद्वेलाः=replete with Sringara rasa, ते एव कटाक्षाः= the same looks, शिशौ मयि =towards me, thy child, करुणितरसार्द्राः =are drenched with merciful affection, ते एव =those very

looks, कलुषितमनोवृत्तिषु=in the case of sin-bent people, ज्वलज्ज्वालोत्ताला:=they become burning flames rising as high as palm trees, सुकृतिषु =towards meritorious people, सुधांशुश्रीदीर्घा:=they become wide charged with the exquisite riches of moon-light, ते एव श्रुतितता:=The same looks which are wide-spread as it were upto ears, and which reflect the depths of Veda-tattwa, नः चिदालोकसुखदाः भूयासुः=may they bestow on us the pleasing light of wisdom-joy !

Mother ! your looks are long; they have heard and visualized the vedic essence. While looking at your husband, your looks get charged with sringara rasa; while looking at me, your child, they get charged with pity and compassion for my innocence. Towards sinful people, they are burning high-flames. Towards meritorious people, they shed wide ambrosial moonlight. May your looks bestow on us superconscious light of joy for ever.

**62. दहन्ती निश्शेषं निखिलकलुषारण्यनिकरं**
**दिशन्त्येकैश्वर्यं प्रणतसकलानन्तफलदम् ।**
**त्रयी दृष्टिर्ब्राह्मी तवसुमनसां गृष्टिरमला**
**जगन्मातर्मातः ! सकलपुरुषार्थान्दिशतु नः ॥**

**अन्व :–** जगन्मातः ! निखिलकलुषारण्यनिकरं निश्शेषं दहन्ती प्रणतसकलानन्तफलदं एकैश्वर्यं दिशन्ती, सुमनसां अमला गृष्टिः तव त्रयी (तृतीया) ब्राह्मी दृष्टिः नः सकलपुरुषार्थन् दिशतु ।

**नन्दिनी :–** जगन्मातः=जगन्मातृभावमापन्ना जगदम्बाविलीनेत्यर्थः, मातः= हे मम मातः! निखिलकलुषारण्यनिकरं =समस्तपापवनसमूहं, निश्शेषं =निरवशेषं, दहन्ती=भस्मीकुर्वन्ती, एषः प्राधान्येन फालनेत्रव्यापारः। प्रणतसकलानन्तफलदं =प्रणतेभ्यः सकलेभ्यः , अनन्तानां =अन्तरहितानां बहूनां फलानां दायि, एकैश्वर्यं =एकमेव अद्वयं मुख्यं च अनन्यलभ्यमित्यर्थः। ऐश्वर्यं =सर्वाधिकसंपदीश्वरभावं च, दिशन्ती =ददन्ती परमेश्वरस्यापि पारमैश्वर्यप्रदायिनी ते दृष्टिरिति भावः । एषः ते दक्षिणनेत्रव्यापारः । अर्धनारीश्वरे ईश्वरस्य दाक्षिण्यात् । सुमनसां=तदेकभवानीभावनया शोभनं मनः येषां तेषां, सर्वेषां मङ्गलानां सर्वमङ्गलाधीनत्वात् तद्भावनया सुमनस्त्वमित्यर्थः, सुमनसां =दिव्यानां, ' सुपर्वाणस्सुमनसः इत्यमरः । अमला =निर्मला 'अमरा' इत्यपि रलयोरभेदात् । गृष्टिः=क्षीरस्राविणी धेनुः सर्वकामदोग्ध्री दिव्यानां कामधेनुश्च । मातृदृष्टिः क्षीरवत् शिशोः सर्वसत्त्वप्रदात्री देवानामपि

सर्वेषां सर्वकामदोग्ध्री किमुताऽन्येषामस्मादृशामित्यर्थः । दक्षिणदृष्टिः केवलं प्रणतबहुफलदं पारमैश्वर्यमेव ददाति (बहुफलस्य वैराग्यकारणत्वात् परमेश्वरात्मातायाः एव प्राप्यत्वाच्चेत्यर्थः ) परंतु अर्धनारीश्वरे वामदृष्टिस्तु जगन्मातुः मातुः स्वकीया देवदानवमानवानामन्येषां सर्वेषामपि कामधेनुवत् सर्वकामदोग्ध्रीति विशेषः । मातुः कामितदातृत्वस्यैव मुख्यत्वात् । यदि मोक्षः काम्येत तर्हि सोपि दीयते । अकामी न मोक्ष कामी भवति इति आर्योक्तेश्च । प्रणतमात्रस्य अनन्तफलमोक्षदायित्वं सौमनस्यमात्रेण मातृभावनामात्रेण सर्वकाम्यप्रदायित्वं चेत्युभयोर्वैशिष्ट्यम्। तर्हि दृष्टिभेदानौचित्यमिति शङ्कायां ? उच्यते । तव एतादृशी पूर्वोक्ता त्रयी =त्र्यात्मिका समैक्या दृष्टिः, यद्यपि त्रीणि नेत्राणि, तथापि दृष्टौ तावदैक्यमेवाप्नुवन्तीत्यर्थः । यथा चास्मादृशानां द्वयोर्नेत्रयोरेकैव दृष्टि र्भवति । अपि च त्रयी =वेदत्रयात्मिका वेदमयी , अत एव ब्राह्मी=ब्रह्ममयी बहिरन्तर्ज्ञानमयी, दृष्टिः, नः=अस्मभ्यं, सकलपुरुषार्थान् =धर्मार्थकाममोक्षान्, दिशतु=ददातु ।

**Nandini :-** जगन्मातः=O Divine Mother !, निखिलकलुषारण्यनिकरं =The whole thick band of forests of sins, निःशेषं=completely, without leaving even a remnant, दहन्ती=conflagrating [this is the work of the brow-eye] प्रणतसकलानन्तफलदम् =Bestows endlessly success-fruits on those who bow, एकैश्वर्यं दिशन्ती =giving the One Prosperity, obtaining which no craving lurks for any other type of prosperity, [this is the work of the right eye of Ardhanariswara] सुमनसां =for good-minded, divine people, अमला (अमरा)=pure and divine (ralayorabhedah), गृष्टिः=the divine milch cow, kamadhenu [this is the work of the left eye of Ardhanariswara], एतादृशी =such as this,त्रयी ब्राह्मी दृष्टिः (तृतीया दृक् ब्राह्मी) =the wisdom-charged glance formed of the three yes, or, the Vedic wisdom-charged glance, सकलपुरुषार्थान् नः दिशतु =may thy glance bestow on us all purusharthas (Dharma, artha, kama, and moksha)!

Mother ! you have three eyes. The third eye in the brow consumes all the thickets of sins. The right eye [that of Eshwara] bestows on those who bow all success- fruits endlessly. This is the only eishwarya it has and it gives it away , i.e. it gives swatmabhava. This is the reason, why the repetition of the great mantra "Om Namah Sivaya" (' to the protector Siva, we bow') protects and bestows on us Swatmabhava ["Avatiti Om –AUM – hence the mantra's meaning is samrakshakaya Sivaya namah " this is how Sri Mudigonda Nagalinga Sastry explains in his book 'Sivapanchakshari

mahamantrartha '-pp 63-78]. The left eye is that of the Serene mother. Therefore it sends towards us, her children, only pure and divine glances. For all good-minded people, for even divine beings, it is the milch - cow, kamadhenu, milking all desires.

For every living being, the look is one, though the eyes are different. In the same way, for the Divine Mother having the Ardhanariswara form, the look must be one though there are three eyes. Hence it is termed as a single one – Brahmamayi dristih – Consciousness-Wisdom -Bliss rolled into one. Thus there is no difference in the Divine Mother's look. That is, the left eye is giving all the desired things with the sole aim of bestowing moksha; the right eye is giving all Dharmonmukha things, again with the sole aim of bestowing moksha; the third eye in the brow is consuming all the dense forests of ignorance, again with the sole aim of bestowing moksha.

May this your look, formed of your three eyes, bestow on us all purusharthas.

63. **भ्रुवोर्मध्यो मातस्तव निखिलचिद्योगमहितः**
**समाधिस्सर्वेशप्रकटितमहानन्दनिलयः ।**
**शिवालोकश्शोकान्धतमसविनाशार्करुचिरः**
**सदा नो देयात् स्वां श्रियमिह महादेवललिताम् ॥**

**अन्व** :– मातः निखिलचिद्योगमहितः सर्वेशप्रकटितमहानन्दनिलयः शोकान्धतमसविनाशार्करुचिरः शिवालोकः समाधिः तव भ्रुवोर्मध्यं इह सदा नः महादेवललितां स्वां श्रियं देयात् ।

**नन्दिनी** :–मातः ! निखिलचिद्योगमहितः =भ्रुवोर्मध्य इत्यस्य विशेषणम् एवमग्रेऽपि । संपूर्णज्ञानयोगेन महान् पूज्यः । अत एव सर्वेशप्रकटितमहानन्दनिलयः= सर्वेशे (न) भ्रूमध्यस्थिते(न) प्रकटितस्य=प्रकाशितस्य, सर्वेशात्मन इत्यर्थः । महानन्दस्य=सदाशिवानन्दस्य, निलयः=आवासः। तथैव शोकाऽन्धतमसविनाशे=शोकरूपगाढान्धकारविनाशे, अर्करुचिरः= सूर्य इव मनोज्ञ प्रकाशवान्, शिवालोकः= शिवात्मकज्योतिः, शिवाशिवयोः सर्वमङ्गलज्योतिः । शिवस्यालोकः स्वात्मज्ञानानन्दात्मकः तृतीयनेत्ररूपः शिवायाः पार्वत्याः = आलोकः दृष्टिः। तृतीयं ज्ञानाग्न्यात्मकं नेत्रं ज्ञानज्योतीरूपमित्यर्थः । समाधिः =सम्यगाधीयते मनः अत्रेति समाधिः, मनसः स्वात्मनि चिदानन्दात्मनि लयीकरणमिति भावः । हे मातः ! तथा भूतः तव भ्रुवोः मध्यः=मध्यप्रदेशः (न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु –रभसः) आज्ञाचक्रस्थानं

सदाशिवदिव्यज्योतिर्निलयश्च इति । एतादृशं ते भ्रूमध्यस्थानं शिवयोगसमाधिभूतं, इह =अस्मिन् लोके ,नः=अस्मभ्यं , महादेवललितां =महादेवेन सदाशिवेन स्वाविनाभावेन योगसंपृक्तेन, ललितां =सुकुमारसुन्दरीं ललितास्वरुपां च, स्वां =आत्मीयां , श्रियं =संपदं शिवयोगसंपृक्तलालित्यं वैभवं शिवशक्तिमयं देयात् =दद्यात्, मातुः भ्रूमध्यस्थानं शिवशक्त्यात्मकस्वात्मज्योतिः प्रकाशकमिति तमेव श्रीलालित्यसदाशिवप्रकाशमस्मभ्यं जगन्माता माता ददातु इति कवेरभ्यर्थना ।

**Nandini :-** मातः=Mother !, निखिलचिद्योगमहितः=great and worthy of worship because of omniscient yoga, सर्वेशप्रकटितमहानन्दनिलयः=the abode of the Great Joy which is the form of the All-Lord, तथैव =in the same way, शोकान्धतमसविनाशार्करुचिरः=beautiful with the sun-like effulgence destroying the thick darkness of sorrow, शिवालोकः=Siva's bright look, or, the abode of Parvati (Sivayah lokah) having the form of the light of wisdom, समाधिः=that state where the mind remains unmoved, तव=your, भ्रुवोः मध्यः=the midpoint of your eye - brows (this is the place of Ajnachakra, the Sadasiva divya jyoti) इह= here, in this world,नः= to us, महादेवललितां= with the inseparable Siva assuming the form of the Divine Beauty called Lalita, स्वां श्रियं देयात् = may it bestow on us the riches of your Spirit !

Mother ! The midpoint of thy brows is great and worthy of worship because it is the abode of all wisdom. This is the form of Parvati. In the same way, it is the abode of the great Joy expressed through the form of Siva. This is the form of Parameswara. Both are of the form of Omkara. This is the place of Ajnachakra; its seed is also Omkara. This is thus the Ardhanariswarajyothirlingarupa. It dispels the darkness of ignorance and is refulgent like the Sun. In this form, the two have the same brow- eye– the eye of the fire of knowledge. Mother! May this thy Bhrumadhya bestow on us your divine riches of Siva and Sakti!

64. सुतानुरागैकमरीचिजालै–
हृदन्तरालात्प्रसृतैः प्रबुद्धम् ।
समुद्यदर्केन्दुसमप्रभावं
ललाटिकाकुङ्कुममम्ब ! नोऽव्यात् ॥

अन्वं :– अम्ब ! हृदन्तरालात्प्रसृतैः सुतानुरागैकमरीचिजालैः प्रबुद्धं समुद्यदर्केन्दुसमप्रभावं

ते ललाटिकाकुङ्कुमं नः अव्यात् ।

**नन्दिनी** :– अम्ब ! हृदन्तरालात् =हृदयस्य अन्तस्तलात् , प्रसृतैः =प्रकर्षेण सृतिं सरणं, गतैः, सुतानुरागैकमरीचिजालैः = सुतेषु योऽनुरागः स एव एकः मुख्यः तदभिन्नैः मरीचिजालैः =किरणमसूहैः, प्रबुद्धं=विकसितं प्रकाशितमिति यावत् । अत एव समुद्यदर्केन्दुसमप्रभावं=सम्यगुद्यन्तौ =उदयं गच्छन्तौ , अर्कश्च इन्दुश्च अर्केन्दू ताभ्यां समः= समानः= प्रभावः= सर्वसुशक्तत्त्वादिः यस्मिन् तत् समुद्यर्केन्दुसमप्रभावं = उद्यत्सूर्यचन्द्रसमानप्रभावं तीक्ष्णसौम्ययोः साम्यावस्थारुपमिति यावत् । ते =तव ललाटिकाकुङ्कुमं = ललाटिकायां सुन्दरफालभागेस्थितं कुङ्कुमं =कुङ्कुमतिलकमितियावत् । नः=अस्मान् अव्यात् =रक्षतात् । अत्र उदयार्कवत् उदयेन्दुवच्च ललटिकाकुङ्कुममुपमितमिति विशेषः । तथैव मातुः ललाटिका कुङ्कुमतिलकस्य स्वपुत्राणां कृते स्वहृदयान्तरालप्रसृतानुरागसमप्रभावरुपेण वर्णनं मातु र्निग्रहानुग्रहसामर्थ्यं व्यनक्ति । हृद्गतभावानां सर्वधा मुखफालभागस्यैव व्यञ्जकत्वादित्याकूतम् । दुष्टशिक्षणे मातुस्तिलकस्य चण्डांशुत्वं शिष्टरक्षणेतु सुधांशुत्वमिति भावः ।

**Nandini :-** अम्ब ! =Mother !, हृदन्तरालात् =from the depths of your heart, प्रसृतैः=emanating, सुतानुरागैकमरीचिजालैः प्रबुद्धं=blossomed and shone by the arrays of the red , red rays of love towards your children, समुद्यदर्केन्दुसमप्रभावं =having the colour of the rising sun and moon, ललाटिकाकुंकुमं=the kumkum dot on your highbrow, नः अव्यात् =may it protect us.

Mother ! the ruddy kumkum dot on your high brow projects the red, red rosy affection from your heart of hearts towards your children. It is hot like the sun's rays towards sinful people who perturb us. It is cool like the moon's rays towards virtuous. Thus it is having the aura of both the sun and moon. May it destroy the sinful beings like the blazing sun, and protect your sons with the cool rays as those of the moon.

**65. शिवलीलाविलासैकसरस्सरसिजं मुखम् ।**
**त्रिवेणी मम मातुस्ते कृष्णलीलातरङ्गिणी ॥**

**अन्व** :– मम मातुः ते मुखं शिवलीलाविलासैकसरस्सरसिजमिव भाति । तथा ते त्रिवेणी कृष्णलीलातरङ्गिणी इव भाति ।

**नन्दिनी** :– मम मातुः=जनन्याः, ते मुखं=वक्त्रं, शिवलीलाविलासैकसरस्सरसिजं –

शिवस्य = सदाशिवस्य तदभिन्नस्य शिवलिङ्गार्यस्य च , लीलाविलासाः एव सरः तस्मिन् जातं, विकसितं, सरसिजं=कमलं एव । सदैव शिवभावनाप्रफुल्लं मुखमिति भावः । तथैव ते त्रिवेणी= शिरोजैः ओतप्रोतेन त्रिपुटिता वेणी , कृष्णलीलातरङ्गिणी =कृष्णवर्णविलासानां तरङ्गिणी =तरङ्गैरोतप्रोततया प्रवहन्ती नदी एव ।" कृष्णलीलातरङ्गिणी " इति भक्तिप्राधानाया रसवत्तमाया पद्यावल्याः नामाऽपि नारायणतीर्थ महाकवेः । सा तावत् पद्य– गद्य–गेयात्मिका त्रितरङ्गिणी सती मातुस्त्रिवेण्या सह समुचितमेवोपमितेति विशेषः ।

**Nandini :-** मम मातुः=My mother's , ते मुखं =your face, शिवलीलाविलासैकसरस्सरसिजं =(is a ) lotus blossomed in the lake of Siva's lilavilasa, तथैव=in the same way, ते त्रिवेणी =your plaited hair formed of the three plaits, कृष्णलीलातरङ्गिणी =it moves in beautifully black playful waves (Narayana Tirtha's Sri Krishnalilatarangini is a work of songs on Krishna. In it we find a poem, then a prose piece and then a song. Thus it is also a three-stream confluence)

Mother! You always immerse yourself in the thoughts on Siva (your husband) and his lake-like playfulness. Your face is a bloomed lotus in that lake. Your three-plaited long hair–dress flashes out shining black colours in its to -and -fro dance. The pun on Krishnalilatarangini, an epic song by Narayana Tirtha, compares it with the three plaits – a poem, a prose narrative and a song– of that Kavyam.

66. **चिदालोकश्रीतारकमखिललोकान्तरबहि-**
**स्समीक्षादक्षं , निर्दहदघघनाऽज्ञान्ध्यगहनम् ।**
**तृतीयं नेत्रं ते जननि ! तिलकं फालफलके**
**तनोतु स्वश्रेयःपदमिह च नः कुङ्कमयुतम् ॥**

**अन्व :–** जननि ! चिदालोकश्रीतारकं, अखिललोकान्तरबहिस्समीक्षादक्षं, अघघनाऽज्ञान्ध्यगहनं निर्दहत्, ते फालफलके तृतीयं नेत्रं सत् कुङ्कमयुतं तिलकं इह नः स्वश्रेयःपदं तनोतु ।

**नन्दिनी :–** जननि चिदालोकश्रीतारकं–चिदेव आलोकश्रीः=ज्योतिःप्रकाशः, सैव (चिदालोकश्रीरेव) तारका= कनीनिका यस्य तत् , अत एव अखिललोकान्तरबहिस्समीक्षादक्षं =अखिललोकानामन्तर्बहिस्तत्त्वानां सूक्ष्मस्थूलानां सम्यक् ईक्षणे दर्शने परिशीलने च, दक्षं =समर्थं, अघघनाऽज्ञान्ध्यगहनं, अघैः= पापैः, घनं=गाढं, अज्ञान्ध्यं =अज्ञानांन्धतमः, अन्धत्वं ज्ञानदृष्टिलोपश्च तेन , गहनं =अप्रवेश्यं अगम्यं च अरण्यं , निर्दहत्=निश्शेषेण भस्मीकुर्वत्,

ते =तव, फालफलके =फालभागे तृतीयं नेत्रं=फालनेत्रं ज्ञानाग्नितेजोनेत्रं सत् , कुङ्कुमयुतं =अरुणकुङ्कुमेन, युतं=सहितं , तिलकं= माङ्गल्यतिलकं, इह=अत्र लोके, नः =अस्मभ्यं, स्वश्रेयः पदं –स्वस्य =आत्मनः, श्रेयसः=मोक्षस्य, पदं =स्थानं, तनोतु=विस्तारयतु सुविस्तरं करोत्वित्यर्थः। अथवा श्वश्रेयः पदमिति पाठे श्वश्रेयसः = मोक्षस्य पदं स्थानमित्यर्थः । तनोतु =विस्तारयत्विति समानम् । ज्ञानानन्दस्वरूपं ते तिलकं ज्ञानानन्दमेवास्मभ्यं प्रसादयत्विति भावः ।

**Nandini :-** जननि =Mother !, चिदालोकश्रीतारकं =the light of wisdom shining in the pupil of the eye, अखिल लोकान्तरबहिस्समीक्षादक्षं =(and hence) capable of perceiving the ins and outs of all worlds, अघघनाज्ञांन्ध्यगहनम् =the thick dark forest of sins, निर्दहत् =consumes it completely, ते फालफलके =on your brow-plate, तृतीयं नेत्रं सत् = having become the brow-eye of the fire of wisdom, कुंकुमयुतं तिलकं= the auspicious red kum kum dot, इह = in this world, नः स्वश्रेयसः पदं तनोतु = may it bless us with the riches of soul-welfare.

Mother ! your third eye can perceive all the ins and outs of all the worlds. It consumes the thick and impenetrable jungle of sins. The same third eye is decorating your brow in the form of the auspicious red kumkum dot. May it burn away all darknesses of sins and bestow on us the soul well-being in the form of Ultimate emancipation! The embodiment of the joy of wisdom is the third eye. May it flash on us the joy of wisdom.

67. **त्रिवेणी ते मुक्ताभरणकलिता मातरवतात्**
**मनोज्ञश्रीलीलारसमधुकरीकृष्णपरमा ।**
**करावर्तक्रीडाललितवलना नागतरुणी**
**शिशोर्मे पाणिभ्यां विकृतसुममालाऽऽकुलकचा ॥**

**अन्व** :– मातः ! मनोज्ञश्रीलीलारसमधुकरी कृष्णपरमा करावर्तक्रीडाललितवलना नागतरुणी मुक्ताभरणकलिता शिशोः मे पाणिभ्यां विकृतसुममाला आकुलकचा ते त्रिवेणी नः अवतात् ।

**नन्दिनी** :– मातः! मनोज्ञश्रीलीलारसमधुकरी –मनोज्ञानां =मनोहराणां, श्रियां=शोभानां, कान्ति संपदां, लीलानां=विलासानां च, रसस्य=आनन्दमकरन्दरसस्य, मधुकर्यः इव= आस्वादनागत भ्रमर्यः इव (वेणीवत् स्थिताः इवेत्यर्थः।) कृष्णपरमा=कृष्ण (नील) वर्णेन उत्कृष्टा, कृष्णा=नीला परमा च = उत्कृष्टा चेति वा अर्थः । करावर्तक्रीडाललितवलना=

करस्य आवर्तक्रीडया= परिभ्रमणखेलनेन करेण भ्रमणेन, ललितं =सुन्दरं, वलनं = वेष्टनं यस्याः सा । वेण्याः करे वेष्टनं भ्रमणं च तरुणीविलासेषु प्रसिद्धमेव । नागतरुणी=तरुणसर्पिणीव स्थिता इति यावत्। मुक्ताभरणकलिता = मौक्तिकभूषणैरलंङ्कृता , शिशोः मे =अन्नप्राशनात् प्राग्दशायां स्थितस्य मे "प्रागन्नप्राशनाच्छिशुः प्राक् चूडाकरणात् बालः" इति निर्णयसिन्धुकारः। "आषोडशाद्भवेद्बालः" इति मनुः। पाणिभ्यां =हस्ताभ्यां, विकृतसुममाला—विकृताः =विकलिताः सुमानां मालाः यस्यां सा वेण्यामलङ्कृतानां मल्लिकादिपुष्पाणां मालाः, सामान्यतः शिशुभिः मातृशिरोजालङ्कृताः पुष्पमालाः विघट्यन्ते इति सर्वविदितमेव । आकुलकचा =आकुलाः =व्याकुलाः, कचाः= केशाः, यस्यां सा, ते =तव त्रिवेणी=त्रितयेन संकलिता वेणी, नः= अस्मान् अवतात्= रक्षतात् ।

**Nandini :-** मातः=Mother ! मुक्ताभरणकलिता =decorated with concatenated pearls, मनोज्ञश्रीलीलारसमधुकरीकृष्णपरमा =beautifully dark like bees drunk with joy-honey, (great like black-hued Srikrishna who brews joy -wine with his flute), करावर्तक्रीडाललितवलना =charmingly and playfully rolling it using the hand or finger as the axis, नागतरुणी=like a young cobra, शिशोः मे =me thy child (before the child starts eating solid food, it is called sisu; before its hairs are long enough to be plaited, it is called bala), पाणिभ्यां विधुतसुममाला=the flower-garland has been displaced and torn asunder by my hands, आकुलकचा =(hence) hair has become dishevelled, त्रिवेणी ते, अवतात् =May your three-plaited long hair-dress protect us !

Mother ! Your long three-plaited head-dress is beautifully dark like a swarm of bees. It is decorated with circles of pearls. Sri krishna's divine black beauty is all in it. When it is rolled on to the hand, it seems like a coiled black cobra. The flower-garlands decorating it are all torn asunder by me your child; with them, your head-hairs also have become dishevelled. O mother ! May your head-dress protect us !

As it is described as a young cobra and also as Krishnaparama, it is meant here that the Divine Mother cannot be approached by notorious people and that she can be approached by meritorious people only.

68. **तनोतु क्षेमं नस्तव जननि ! नीलालकचितः**
**त्रिवेणीवेणीसंवलितकबरीभारवलयः ।**

तटिच्चूडारत्नस्फुरितघननीलस्सुमभरः
मृडानीपादाब्जावृतमधुकरीवारसरसः ॥

अन्व :- जननि ! नीललाकचितः तटिच्चूडारत्नस्फुरितघननीलः सुमभरः मृडानीपादाब्जावृतमधुकरीवारसरसः । तव त्रिवेणीवेणीसंवलितकबरीभारवलयः नः क्षेमं तनोतु ।

नन्दिनी :- जननि ! नीलालकचितः–नीलैः, अलकैः=चूर्णकुन्तलैः, चितः= व्याप्तः, तटिच्चूडारत्नस्फुरितघननीलः=तटित इव चूडारत्नानि = केशपाशालङ्कतरत्नानि, तैः स्फुरितः=चञ्चलाविद्युत्प्रकाशेनेव प्रकाशितः, घननीलः =मेघश्यामः वर्ण : यस्य सः, सुमभरः= सुमैः भारवान् , मृडानीपादाब्जावृतमधुकरीवारसरसः –मृडान्याः=पार्वत्याः, पादाब्जे=पादकमले, आवृतानां, समावृतानां , मधुकरीणां= भ्रमरीणां , वारः= संघातः , तेन सरसः= समानानन्दरसवान् (मधुकरी साम्यात्), अत्र पार्वतीपादाब्जानतायाः मातुः=शिरसः पश्चाद्भागे त्रिवेणीवेणी वलयितकबरीभारवलयः अम्बुजावृतमधुकरीव्रातवलयमिव भातीति भावः । जगन्मातृ पादाम्बुजसमावृतभ्रमरीव्रातवलयमिव मातृत्रिवेणीवेणीसंवलितकवरीभारवलयः प्रतिभातीति तात्पर्यम् । तादृशः , ते=तव त्रिवेणीवेणीसंवलितकबरीभारवलयः –त्रिवेण्यात्मकया वेण्या=प्रवेण्या संवलितः =वलयाकारेण संवलितः, कबरी भारस्य =केशपाशस्य वलयः =वर्तुलकारेण निर्मितः वेणीधम्मिल्लः - त्रिवेणी वलयितकेशपाश इति यावत् (जडकोप्पु इति आन्ध्रबाषायां प्रसिद्धः) नः=अस्मभ्यं क्षेमं =कुशलं, "अप्राप्तप्रापणं योगः तद्रक्षणं क्षेम इति श्री शङ्करभाष्योक्त्या अप्राप्तप्रापण –तद्रक्षणरूपं कौशल्यं तनोतु =सुविस्तरं करोतु इत्यर्थः ।)

**Nandini :-** जननि ! =Mother ! नीलालकचितः=spread over with black curls of hairs , तटिच्चूडारत्नस्फुरितघननीलः=with several ornaments bedecking it, the round hair-dress is like a black cloud bedecked with lightnings, सुमभरः=full with flowers and hence sweetly beautiful, मृडानीपादाब्ज+आनतमधुकरीवार सरसः=beautiful like a swarm of lady- bees crowding on the lotus - feet of blissful Parvathi, ते त्रिवेणी संवलित कबरीभार वलयः =your three-plaited head-dress beautifully rolled into a round, नः क्षेमं तनोतु =may it bestow on us well-being !

Mother ! you used to wear a round head-dress. On it you used to wear a head-ornament. You used to decorate it with beautiful flowers. It seemed to be then like a dark cloud bedecked with the lightnings of flowers and Head-jewel. When your head bowed to Gouri your round head-dress used to shine like a swarm of bees

crowding her lotus-feet. May it shower well-being on us !

69. **मातस्ते शिवपाणिपल्लवमहस्स्फूर्त्येव सन्दीपिता**
**सिन्दूरेण, समुज्ज्वलन्मणिगुणा, सीमन्तरेखारमा ।**
**सर्वैश्वर्यसुखाय नः प्रभवताल्लावण्यपुण्यश्रियां**
**श्रीपद्येव, सुषुम्नया प्रकटिता ज्योतिश्शिखेवात्मनः।।**

**अन्व :–** मातः! शिवपाणिपल्लवमहस्स्फूर्त्या इव सिन्दूरेण सन्दीपिता, लावण्यपुण्यश्रियां श्रीपद्या इव स्थिता , सुषुम्नया प्रकटिता आत्मनः ज्योतिश्शिखा इव च स्थिता समुज्ज्वलन्मणिगुणा, ते सीमन्तरेखारमा , नः सर्वैश्वर्यसुखाय प्रभवतात् ।

**नन्दिनी :–** मातः ! शिवपाणिपल्लवमहस्स्फूर्त्या इव– शिवस्य =शिवस्य तदभिन्नशिव लिङ्गार्यस्य च, पाणिपल्लवस्य, पाणिः=करः, फल्लवः इव =किसलय इव , पाणिपल्लवः तस्य किसलयवत् स्थितस्य करस्येत्यर्थः । तस्य महसः= तेजसः, स्फूर्त्या इव =स्फुरणेनेव चैतन्येन कारणेनेवेत्युत्प्रेक्षा । सिन्दूरेण= सीमन्ते क्षिप्यमाणेन सौमङ्गल्यराग (चूर्ण) द्रव्यविशेषेण, कुङ्कुमेनेति यावत् । सन्दीपिता =सम्यक् प्रकाशिता, लावण्यपुण्यश्रियां–लावण्यस्य= रुच्यसौन्दर्यस्य मनोज्ञसौन्दर्यस्येति यावत् । तस्य पुण्याः =पवित्राः सदाचरणैकशीला इति यावत्। तादृशाः श्रियः=शोभाः संपदश्च । लावण्यस्य पवित्रशोभासंपन्नत्वं तु भर्तृविषय एव काम्याकर्षकत्वं अन्यत्र शुद्धसात्त्विकतया नमस्कार्यतया च सुसम्मान्याकर्षणवत्वं चेत्यवगन्तव्यम्। भर्तृभिन्नास्सर्वेऽपि तां नमस्कार्यतया भक्त्यैव पश्यन्तीति भावः । तादृशपुण्यश्रीणां श्रीपद्या इव- श्रियः =लक्ष्म्याः, पद्या इव =पादमार्ग इव लक्ष्म्याः आगमनमार्ग इव स्थितेत्यर्थः । अपि च, सुषुम्नया =ब्रह्मनाड्या, प्रकटिता =प्रकाशिता, आत्मनः= स्वात्मनः, चिदात्मन श्च, ज्योतिश्शिखा इव =दिव्यदीपज्वालेव च स्थिता इत्यर्थः । समुज्ज्वलन्मणिगुणा–सुमुज्वलत् =सम्यक् प्रकाशमानं, मणिगुणं = मणिभिर्निमितं, गुणं =सीमन्ताभरणमणिरज्जुः यस्यां सा । ते =तव सीमन्तरेखारमा –सीमन्तरेखैव=केशवीधीरेखैव रमा =लक्ष्मीः, तद्रूपिणी लक्ष्मीः शोभासंपदित्यर्थः । नः=अस्माकं ऐश्वर्यसुखाय =ईश्वरस्य भावः तत्त्वं, अणिमाद्यष्टसिद्ध्यादिमत्वं त्रैकालिकबन्धशून्यं कर्तुमकर्तुमन्यथाकर्तुं समर्थं नित्यज्ञानाधिकरणं, सत्यज्ञानानन्तरूपं , सर्वेश्वरेश्वरं सदाशिवस्वरूपं च, तस्य सुखाय= आनन्दाय तदनुभवायेत्यर्थः । प्रभवतात् =प्रकर्षेण सुसमर्थेन भूयात् इति मातरं जगन्मातरं प्रति प्रार्थना ।

**Nandini :-** मातः=Mother ! शिवपाणिपल्लवमहःस्फूर्त्येव =as though with the divine shine of Siva's [Sivalingarya's] hand, सिन्दूरेण =with red kumkum powder, सन्दीपिता =shining brightly, समुज्ज्वलन्मणिगुणा=having brilliant diamond-studded godlen chain along the line parting the head-hairs longitudinally, लावण्यपुण्यश्रियाम् =for the holy riches of

beauty, श्रीपद्येवस्थिता =like the path followed by SriLakshmi, सुषुम्नया =With the Brahmanadi, प्रकटिता =expressed, आत्मनः =of the soul, ज्योतिःशिखा इव =as though it is the torch of wisdom, ते सीमन्तरेखारमा =the beauty of the longitudinal line parting your head-hairs, नः सर्वैश्वर्यसुखाय प्रभवतात् =may it be powerful, in giving us all types of prosperities (Anima etc.)

Mother ! Siva [Sivalingarya] had decorated the longitudinal line parting your head-hairs with auspicious red kumkum. It is like the divine brilliance which has emanated from Siva's hand. It is decorated with the golden chain studded with diamonds and other precious stones. Hence that line is like a foot - path for the holy and beautiful Lakshmi to enter into you. The holiness in your beauty is only for attracting your husband and in the case of others, it produces devotion. Observed keenly with concentrated yoga-power, it flashes through sushumna nerve and thus seems to us like the flame -line of the light of soul. O Divine Mother ! May that longitudinal beauteous line right across your hairs induce in us Anima and other supremacies along with all types of prosperities ! The poet's imaginative power has reached its acme in imagining the longitudinal line across the head-gear as the brilliant light-line of soul illuminated by the brahmanadi.

70. **मङ्गल्यौ मङ्गलानां हिमगिरितनयापूजने स्वाङ्गुलीभ्यां**
**प्रायुक्तौ गण्डयोस्ते चिदमलमुकुराभोगयोः कुङ्कुमाङ्कौ ।**
**नव्योद्यत्पुष्पवन्तौ नतजननिखिलारिष्टनिर्वाप (तन्त्रे) यन्त्रे**
**श्रीवाणीवासपद्मे स्वयमिह तनुतां नः शिवस्वप्रबोधम् ॥**

**अन्व :–** जननि ! हिमगिरितनयापूजने स्वाङ्गुलीभ्यां चिदमलमुकुराभोगयोः ते गुण्डयोः प्रायुक्तौ, नव्योद्यत्पुष्पवन्तौ, नतजननिखिलारिष्टनितर्वापयन्त्रे (तन्त्रे) श्रीवाणीवासपद्मे, मङ्गलानां मङ्गल्यौ कुङ्कुमाङ्कौ नः शिवस्वप्रबोधं वितनुताम् ।

**नन्दिनी :–** जननि ! हिमगिरितनयापूजने =प्रतिनित्यं गौरीपूजने तत्समये इत्यर्थः । ते= तव, चिदमलमुकुराभोगयोः –चिदेव=ज्ञानमेव, अमलमुकुरः=स्वच्छदर्पणः, तद्वत् आभोगयोः=सुविशालयोः, गण्डयोः= कपोलयोः कपोलोपरितलभागयोरिति यावत् । स्वाङ्गुलीभ्यां =स्वस्याः दक्षिणकरस्य अङ्गुष्टमध्यमाभ्यां अङ्गुष्ठ-अनामिकाभ्यां वा अङ्गुलीभ्यां (करणभ्यां), प्रायुक्तौ=प्रयोजितौ अङ्कितवत् कृतौ, नव्योद्यत्पुष्पवन्तौ –नव्यौ =तत्कालमेवोदयं गच्छन्तौ,

पुष्पवन्तौ=सूर्यचन्द्रौ "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरा" वित्यमरः । सूर्यचन्द्राविव स्थितावित्यर्थः । नतजननिखिलारिष्टनिर्वापयन्त्रे (तन्त्रे) —नतजनानां =प्रणतजनानां ये अरिष्टाः=आपदः तेषां निर्वापाय =निश्शेषनिवारणाय, तदर्थे इति यावत् । यन्त्रे =सङ्कल्पितकार्यसुखसाधके सुवर्णादिपत्रे बीजाक्षरोत्कीर्णे चक्रे मन्त्रस्य यमनान्नियन्त्रणात् त्रायतः इति यन्त्रे तादृश यन्त्रसदृशे यन्त्ररूपे वा इत्यर्थः । तन्त्रे इति पाठेतु सङ्कल्पशक्त्याः तननात् = विस्तरणात् त्रायतः इति तन्त्रे तादृशततन्त्रसदृशे तादृशे तन्त्ररूपे वा इत्यर्थः । श्रीवाणीवासपद्मे—श्रियश्च =लक्ष्याश्च, वाण्याश्च=सरस्वत्याश्च, वासाय=निवासाय प्रकाशिते पद्मे=द्वे पद्मे, मङ्गलानां =शुभानामपि, मङ्गल्यौ =शुभावहौ, कुङ्कुमाङ्कौ =सर्वमङ्गलकुङ्कुमपूजाकुङ्कुमस्य अङ्कौ =चिह्ने, नः=अस्मभ्यं, इह= अस्मिन् लोके, स्वयं = स्वयमेव, अन्यप्रेरणां विनेत्यर्थः । शिवस्वप्रबोधं =शिवयोः, स्वस्य =आत्मनः, शिवाभिन्नात्मनः सोऽहंभावापन्नस्येत्यर्थः । प्रबोधं =प्रकृष्टं ज्ञानं, तादृशशिवयोर्मातापित्रोः स्वस्य =स्वस्वरूपस्य मम, प्रबोधं =तदभिन्नानन्दात्मस्वरूपावबोधं वा तनुतां =सुविस्तरं कुरुतामित्यभ्यर्थना । सूर्यचन्द्रात्मतया तयोः कुङ्कुमाङ्कयोरेव तत्सामर्थ्यं निराबाधमेवेति भावः ।

**Nandini :-** जननि =Mother !, हिमगिरितनयापूजने =during the worship of mother Parvathi, ते चिदमलमुकुराभोगयोः गण्डयोः=on the wide cheeks which shine like spotless mirrors of wisdom, स्वाङ्गुलीभ्यां प्रायुक्तौ =fixed with your fingers (particularly with the right thumb and ring finger) नव्योद्यत्पुष्पवन्तौ =like the new risen Sun and moon, नतजन निखिलारिष्टनिर्वापयन्त्रे =the geometrical complexes that brush away all difficulties and impediments of those devotees who bow to you, श्रीवाणीवासपद्मे =the lotuses on which Lakshmi and Saraswathi permanently seat themselves, मंगलानां =of all auspiciousnesses, मंगल्यौ =the most auspicious, कुंकुमांकौ =the two kumkum round dots, नः=to us, इह =in this world, स्वयं =by itself, शिव स्वप्रबोधं वितनुतां =may it spread fully the unified wisdom of Parvathi and Parmameswara !

Mother ! everyday you used to perform Gouri worship. While performing that worhip, you used to have two kum kum round dots adorning your cheeks (one impressed with the thumb and the other with either middle or ring finger- this is the traditional practice of all elderly women whose husbands are living, particularly of Brahmin ladies in Telangana). Those two dots, mother ! are like the new rising Sun and Moon. They thus indicate your merger with

mangala Gouri. The word पुष्पवन्तौ indicating Sun and Moon (Ekayoktya pushpavanthau divakaranisakarou- Amaram) has a special significance. The Sun is a form of Siva (Bharga). The Moon is the Shodasakalamaya Mother-form. The mother's face is as it were filled with the two round cheeks and it is thus a merged form of both Siva and Sakti. Hence they are described as yantras capable of destroying all difficulties and impediments. (Centralising some powers into straight lines, geometrical figures are drawn on copper sheets with the express purpose of protecting upasakas. They are called yantras). Not only that. They are permanent lotus-like abodes for Lakshmi and Saraswathi. Therefore they are the most auspicious of all auspicious things. Mother ! May the kum kum dots impressed on your cheeks bless us with the blissful union of our soul with the united power of Pravathi and Parameswara. Indeed, riches and wisdom which ward off all dangers and difficulties, are steps convenient enough to attain a steady and sustained Siva-jnana.

**71. श्रुतिस्मृतिपुराणेतिहासकाव्यश्रुतिश्रिया ।**
**सुसंस्कृते श्रुती तेऽम्ब ! ब्राह्मीं व्यङ्क्तस्स्वभूषणैः ॥**

अन्व :– अम्ब ! श्रुतिस्मृतिपुराणेतिहासकाव्यश्रुतिश्रिया सुसंस्कृते ते श्रुती स्वभूषणैः ब्राह्मीं व्यङ्क्तः।

नन्दिनी :– अम्ब ! श्रुतिस्मृतिपुराणेतिहासकाव्यश्रुतिश्रिया - श्रुतयः=वेदाः, स्मृतयः= मनुस्मृत्यादिधर्मशास्त्राणि, पुराणानि =भागवतादिपुराणानि, सर्ग-प्रतिसर्ग -मन्वन्तर-वंशानुचरितलक्ष्णानि, इतिहासाः= रामायणमहाभारतादि पुरावृत्तानि, तेषां श्रुतेः=श्रवणस्य, श्रिया=संपदा ज्ञानसंपदा इति यावत् । सुंसंस्कृते =सुष्ठु अविचलितस्थैर्येण, संस्कृते=संस्कारवत् कृते ,मनोबुद्ध्यात्मसु स्थिरतया समीचीनस्वात्मस्थितिमापादिते । यत् शब्दार्थतत्वं श्रुतमवगतं, तदनुपदमेवात्मनि स्थिरतयाऽभिसंभावितव्याप्तमित्यर्थः। ते =तव, श्रुती =श्रोत्रे, स्वभूषणैः= ताटङ्काद्यलङ्कारैः, ब्राह्मीं =अखण्डज्ञानमयीं सरस्वतीं दिव्यतेजोमयीं, व्यङ्क्तः= गमयतः । अम्बायाः, जगदम्बायाः शब्दब्रह्मणः ग्राहकस्य श्रवणेन्द्रियस्य स्वश्रवणालङ्कारैः ब्राह्मीव्यञ्जनमेव क्रियते इति मातृवचसां अतोऽप्यधिकाशक्तिरस्तीति प्रतीयते ।

**Nandini :-** अम्ब =Mother !, श्रुतिस्मृतिपुराणेतिहासकाव्यश्रुतिश्रिया =equipped with the richness of listening to the sacred wisdom embedded in Vedas, Dharmasastras, Puranas (like Sri Mahabhagavatham etc.) historical epics (like Ramayana.

Mahabharata etc.) and Mahakavyas (like Raghuvamsa Kumarasambhawa etc) सुसंस्कृते ते श्रुती =your two ears decorated by that wisdom, स्वभूषणैः =(decorated with) ear-rings etc. and also with the knowledge of Vedas, Sastras etc. ब्राह्मीं व्यङ्क्तः=the deity of wisdom is manifested.

Mother ! your ears are decorated with external ornaments like ear-rings for attracting saumangalya. They are decorated even with greater ornaments because they have absorbed the wisdom expressed in Vedas, Sastras, Puranas and Kavyas. Thus they are decorated in the way Bhartrihari intended : " Srotram Srutenaiva na kundalena". They reflect the " light " of the Goddess of learning.

**72. त्रयी, स्मार्तं रामायणमपि, महाभारतकथा**
**पुराणं काव्यं, ते श्रुतिविषयमाप्य स्वयमभूत् ।**
**भवत्प्राज्ञश्रीचिन्मयललितरस्याऽमृतसरि–**
**द्वचोगम्यं तन्मेऽस्त्वखिलसुखदं मातरनिशम् ॥**

**अन्व** :– मातः! त्रयी, स्मार्तं, रामायणं, महाभारतकथा, पुराणं, काव्यं, अपि ते श्रुति विषयं आप्य यत् स्वयं भवत्प्राज्ञश्रीचिन्मयललितरस्याऽमृतसरिद्वचोगम्यं अभूत् तत् मे अनिशं अखिलं सुखदं अस्तु ।

**नन्दिनी** :– त्रयी =वेदाः ऋग्यजुस्सामानि, स्मार्तं =मनुस्मृत्यादि धर्मशास्त्रोक्तं, रामायणं, महाभारतकथा, पुराणं = मत्स्यादि, काव्यं =रघुवंश शाकुन्तल कादम्बर्यादि, अपिः चार्थे, ते =तव, श्रुतिविषयं =श्रवणगोचरं , आप्य=प्राप्य, सुश्रुताः इत्यर्थः। आङ्पूर्वस्य आप्लृधातोः ल्यबन्तं रूपम् । यत्=श्रुतिस्मृतिपुराणेतिहासकाव्यतत्वं, स्वयं =अनन्यप्रेरणया, भवत्प्राज्ञश्रीचिन्मयललितरस्यामृतसरिद्वचोगम्यं –भवत्प्राज्ञश्रियः=त्वदखण्डपाण्डित्यसंपदः, चिन्मयीभिः= ज्ञानमयीमिः, अमृतसरिद्भिः=सुधास्रवन्तीभिरिव स्थिताभिः, वचोभिः=त्वदीयवाग्भिः, गम्यं =प्राप्यं ज्ञेयं च, अभूत्=अभवत् , तद्=त्वद्वचोगम्यं श्रुत्यादितत्वं, मे =मह्यं , अनिशं =सदा, अखिलसुखदं=अखिलसुखदायि , अस्तु=भवतु, अत्र पूर्वश्लोकोक्तस्य फलस्वरूपमभिवर्णितम् ।

**Nandini :-** मातः=mother !, त्रयी =All the four Vedas [Vedas which are in the three forms–poems (rchas) prose (yajuh) and songs (sama)], स्मार्तं =that which is given in Manusmriti etc,रामायणं महाभारतकथा पुराणं काव्यमपि =Ramayana, Mahabharata, Puranas like

Mahabhagavatam, Kavyas like Raghuvamsa etc, ते श्रुतिविषयं आप्य =they have reached your ears, ( आङ् + आप्ऌ+ ल्यप् )भवत् प्राज्ञश्रीचिन्मय ललित रस्य अमृतसरित् =your erudition like rivers of knowledge–nectar capable of producing chittavisthara, chittavidruti (catharsis of emotions), वचोगम्यं यत् अभूत् =that which can be known through your knowledge-exuding words, तत् =that quintessence of knowledge and wisdom, अनिशं =always, मे अखिलसुखदं अस्तु =may that indestructible and permanent happiness be bestowed on me !

Mother ! May I be blessed with streams of your ambrosial words charged with the quintessence of all Vedas, sastras, puranas and kavyas ! May that knowledge reflect in my words always.

73. **श्रुतिश्रीसौवर्णोद्विरचितनवार्णोज्ज्वलमणि–**
**प्रबन्धश्रीचक्रे इव, वदनसौन्दर्यगतये ।**
**सदाकर्णालग्नाविव शशिरवी, संप्रतनुतां**
**शिवं नस्ताटङ्कौ तवजननि सर्वेष्टफलदौ ॥**

**अन्व :–** जननि ! श्रुतिश्रीसौवर्णोद्विरचितनवार्णोज्ज्वलमणिप्रबन्धश्रीचक्रे इव स्थितौ, तव वदनसैन्दर्यगतये सदा कर्णालग्नौ शशिरवी इव स्थितौ, तव ताटङ्कौ सर्वेष्टफलदौ सन्तौ नः शिवं प्रतनुताम् ।

**नन्दिनी :–** जननि ! श्रुतिश्रीसौवर्णोद्विरचितनवार्णोज्ज्वलमणिप्रबन्धश्रीचक्रे इव – श्रुत्योः=श्रोत्रयोः, श्रियै=शोभायै, सुवर्ण एव सौवर्णं तेन उद्विरचिते =उच्छूनोपरितलतया निर्मिते, नवार्णाः– नवार्णमन्त्रस्य नववर्णाः ये "ॐ ऐं –ह्रीं –क्लीं –चा–मु–ण्डा –यै –वि –च्चे" , ते एव उज्ज्वलमणयः= समुन्नतप्रकाशवन्नवरत्नानि, तेषां प्रबन्धश्रीचके= प्रकृष्टबन्धात्म–कश्रीचक्रद्वयमिव स्थितौ । अत्र श्रुतिश्रीसौवर्णशब्दे वैदिकाः सुप्रभावशालिनः वर्णाः अकारादयः अपि अनुसन्धेयाः । श्रोत्रयोः श्रवणधर्मित्वात् । शब्दा एव वर्णरूपिणः ताटङ्कमण्यात्मना श्रवणाभरणतां प्राप्ताः परिचरन्तीति भावः । वदनसैन्दर्यगतये=तव मुखसौन्दर्यस्य प्राप्त्यै, सदा=नित्यं, कर्णालग्नौ,=कर्णयोरासमन्ताल्लग्नौ, शशिरवी इव=चन्द्रार्काविव स्थितौ । मातृमुखस्य क्रोधे सूर्यसमता शान्ते च चन्द्रसमतेति भावः । तथा स्थितौ तव ताटङ्कौ= सौमङ्गल्यकर्णालङ्कारौ (तालपत्रे इति यावत्) सर्वेष्टफलदौ=सर्वेषां समस्तवाञ्छितसत्फलदायिनौ सन्तौ, नः=अस्मभ्यं, शिवं मङ्गलं तदात्मकं साक्षात् शिवस्वरूपं च, प्रतनुतां=प्रकर्षेण विस्तारयतां प्रयच्छतामिति यावत्।

**Nandini :-** जननि =Mother !, श्रुति =of ears, श्री=for their beauty

[ for the beauty of Vedas] सौवर्ण =with gold (with powerful letters charged with swara). उद्विरचित =embossed, नवार्ण =letters of the Navarna Mantra ["Aim, Hrim, Kleem Chamundayei Vicche"] मणि प्रबन्ध = fast concatenation of the precious stones of letters, श्री चक्र इव =those which are like two Srichakas. वदनसौन्दर्यगतये = for obtaining the beauty of your face (anger-charged or peace -charged), सदा = always, कर्णालग्नौ इव =fast attached to the ears as if to serve them, तव ताटङ्कौ= your two ear-rings, सर्वेष्टफलदौ = bestowing the desired fruits to one and all, नः शिवं प्रतनुताम् =May auspiciousness be our full share!

Mother ! you have decorated your ears with ear-rings made of su-varna ( gold)– i.e. the whole world of words has decorated your ears. The word "Suvarana" connotes also jyothi. The nine letters of the Navarna Mantra are like the nine precious stones studded in the ear-rings . They seem to be like two Srichakras shining with the quintessence of Siva and Sakti. Not only that. The Sun wishes to have the ruddy beauty of your face charged with anger; the moon wishes to have the serene beauty of your face charged with peace. As though for fulfilling their desires, the sun and the moon are waiting on both the sides of your face in the form of the golden ear -rings hanging from your ears. Mother ! May your ear -rings bestow on us the fulfillment of our desires and shiningly project the embodiment of auspiciousness (Siva) in all His glory !

**74. प्रसृतं प्रपदे श्रितं च पादे**
**सुधृतं जानुनि प्रोत्थितं नितम्बे ।**
**त्वयि तु स्तनयोर्मयाम्ब ! पीतं**
**शिवलिङ्गैकविशालभागधेये ।।**

**अन्व** :– जननि ! मया (बाल्ये) शिवलिङ्गैकविशालभागधेये त्वयि (त्वच्छरीरे) प्रपदे प्रसृतं, पादे च श्रितं , जानुनि सुधृतं, नितम्बे प्रेत्थितं, स्तनयोः सुपीतं च आसीत् ।

**नन्दिनी** :– अम्ब ! मया बाल्ये इति शेषः। शिवलिङ्गैकविशालभागधेये– =शिवलिङ्गस्य=तव भर्तुः मम पितुश्च शिवलिङ्गार्यस्य, एकं = मुख्यं, विशालं =विशेषेण प्रकशवत् विस्तृतं विशालाक्ष्यभिधानं (नामैकदेशे नामग्रहणमिति न्यायात्), भागधेयं =भाग्यं, तस्मिन् शिवलिङ्गार्यस्वभाग्यरूपायां धर्मपत्न्यां, त्वयि=त्वच्छरीरे इत्यर्थः । प्रपदे=तव पादाग्रे , प्रसृतं

=इतस्ततः पादाग्रपरिसरे एव तनुना ( मच्छरीरेण) अनेकशः परिसरणं कृतमित्यर्थः । उत्थाय स्थातुमशक्यत्वात् । ततः पादे=तव पादतले , श्रितं =आश्रितं किञ्चिदिव उत्थानार्थं आश्रयः कृत इत्यर्थः । किञ्चिदिवोत्थित इति भावः । ततः जानुनि =ऊरुजङ्घयोर्मध्यभागे, सुधृतं =सुष्ठु दृढतया धृतं=अवलम्बितं, जान्ववलम्बनेन क्श्चिदुत्थितमित्यर्थः । ततः नितम्बे=जघनभागे, तदाधारेणेत्यर्थः । प्रोत्थितं =प्रकर्षेणोत्थाय स्थितं, त्वत्करालम्बनेनेत्यध्याहारः । ततः स्तन्यार्थमयं यत्न इति जानत्या त्वया वात्सल्यात् कक्षेकृतेन (अधिष्ठापितेन) मया, स्तनयोः=स्तन्यवतोः, (सप्तमीद्विवचनं) पीतं=स्तन्यं पीतमित्यर्थः । एतावदेव मम शैशवे त्वद्गात्रप्रेदेशानां आलम्बनं आसीत् । पदे श्रितमित्यादि शब्दैः मातृपादौशरणतया समाश्रिताविति शैशवेऽपि संस्कारायात मातृभक्तिर्व्यज्यते । पतिभाग्यदेवतायास्तव आपादाग्रस्तनं मत्प्रसरणं स्तन्यामृतपानायैवेति, वत्सस्य मातृस्तन्यं प्रति मातृशरीरे प्रसारप्रयत्नस्सहजतया वर्णितः । "अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे। अधरेऽरुणमाविरस्तु चित्ते । करुणाशालिकपालि भागधेयम् "॥ इत्यप्पय्यदीक्षितपद्यस्य भङ्ग्यन्तरानुकृतिरियम् । तत्र एकस्यां आंशिकतया एकेन बहुधा गुणोल्लेखनम् अत्र तु एकस्यां आंशिकतया बहुधाक्रियोल्लेखनमिति विशेषः । एतद् विषमवृत्तं ललितेति । अप्पयदीक्षितेन उपर्युक्त " अकृशं कुचयो" रिति पद्ये प्रयुक्तम्। ललिताया लक्षणम् -सजसा विषमे यदागुरुस्सभरास्याल्ललिता समेलगौ (वृ.र)। तच्चात्र गुर्वाधिक्येन विषमे ससजगगाः, समेतु सभरयाः प्रयुक्ताः तदेतत्सुललितमिव संभाव्यम् ॥

**Nandini :-** अम्ब = Mother !, मया =by me, बाल्ये =in my childhood, शिवलिंगैकविशालभागधेये (त्वयि ) =in your body which is the personification of the fortune of Sivalingarya, ( the word 'visala' suggests ' Visalakshi' by the rule of namykadese namagrahanam) , प्रपदे =on the edge of your feet, प्रसृतं =it spread, (ततः) पादे श्रितं =(afterwards) it has its abode on your feet, जानुनि सुधृतं =then it has been held firmly on your knees, नितम्बे प्रोत्थितं = then it has been made to stand taking the support of the waist- zone, [ततः कराभ्यां कक्षे अधिष्ठापनानन्तरम् = then making me sit on your waist-seat], स्तनयोः पीतं = then milk has been drunk to my heart's content from your two breasts.

Mother ! in my childhood, I was in a state of just standing, with tottering feet. You stood in front of me at a distance. I saw you. I wanted to have milk. Immediately, I crawled nearer to the edge of your feet. Then I stood up half supporting myself with your legs. Afterwards, I stood fully up taking hold of your knees.

I wanted to still further climb up by taking hold of your waist with my outstretched little hands. You understood that all this my exercise was to have milk. You stretched out your hands lovingly and made me perch on your waist. Then I drank to my belly's full milk from your breasts. Mother ! Your body was the embodiment of my father's fortune. It used to give all happiness in the fields of Dharma, Artha and Kama. But that same body of yours used to have much motherly love towards me because it used to give me the life-sustaining milk -nectar of knowledge of both the worlds.

This Vritta is an uneven one. There is an additional 'guru ' to the usual Lalithavritta. For Lalithavritta, the ganas are sa, sa, ja, ga in odd lines and sa, bha, ra, la, ga in even lines. Here, in the above stanza the odd line ganas are made sa, sa, ja, ga, ga. The great poet Appayya Dikshita gave an example for this in his Kuvalayananda. " Akrsam Kuchayoh Krsam Vilagne........" In this, many qualities are shown in different parts of the same being. In the present stanza (74) different actions of one are expresed in relation to another. So, we can say that this poem is an imitation of the poem of Appayya Dikshita in a different vein.

One little girl of about one and a quarter of an year, by name Kavya residing in one portion of the poet's house used to go to the bedroom and lie there on the bed weeping whenever she wanted to have milk from her mother. Thus, little children adopt several pranks to attract the attention of their mothers. The attempt-chain described in the above poem is one such device. That the Divine Mother will also help the devotee attempting to reach to and drink the nectar of Self-Realization, is evident in the poem.

75. लावण्यैकसरश्शरीरममलं पाणी च पादौ तथा
हृद्वक्त्रे षडनूनरागकमलश्रीचक्रचिन्मण्डलम् ।
संलापाः श्रुतिगम्यसौम्यपदसारस्यार्थहंसाकराः
सारस्वत्यमिहाम्ब ! तत्त्वमवतात्ते ह्येतदस्मान्विशत् ॥

अन्व :– अम्ब ! अमलं ते शरीरं लावण्यैकसरः । तथा पाणी पादौ हृद्वक्त्रे च एते षट् अनूनरागकमलश्रीचक्रचिन्मण्डलं । संलापाः श्रुतिगम्यसौम्यपदसारस्यार्थहंसाकराः । एतत् ते सारस्वत्यं तत्त्वं इह अस्मान् विशत् अवतात् ।

**नन्दिनी** :- अम्ब ! अमलं = निर्मलं, ते =तव, शरीरं , लावण्यैकसरः=लावण्यं एव एकं =मुख्यं ,सरः=कासारः सौन्दर्यकासार इत्यर्थः । तथा पाणी=त्वत्करौ, पादौ=त्वच्चरणौ, हृद्वक्त्रे च =तव हृदयं मुखं च, एते षट्=त्वच्छरीरावयवतया स्थितानि आहत्य षट्संख्याकानि, अनूनरागकमलश्रीचक्रचिन्मण्डलं=अनूनरागकमलश्रीचक्राणि चिन्मण्डलानीवेति व्याघ्रपुरुषवदुपमानोत्तरपदकर्मधारयः। कर – चरण – हृदय – मुखानि अनुरागैककमलश्रियां चक्राणि श्रीचक्राणीव चिन्मण्डलानि भूत्वा स्थितानीत्यर्थः । सरसि विकसितानि कमलानि मण्डलैः चक्राणीवैव दृश्यन्ते तीरस्थितैरिति प्रसिद्धमेव । तदात्मकं चिन्मण्डलं ज्ञानमण्डलमेवेत्यर्थः । करादिकं षट् रागकमलश्रीचक्रचिन्मण्डलमेवेति भावः । भारतीयाः कमलानां ज्ञानप्रतीकत्वमवगच्छन्तीति चिन्मण्डलौपम्यं सुसङ्गतम् । मातृकरादिकं ज्ञाननिधानमिति सारांशः । संलापाः =संभाषणानि, श्रुतिगम्यसौम्यपदसारस्यार्थहंसाकराः–श्रुतिगम्यानां = श्राव्याणां, सौम्यानां = ललितानां, पदानां शब्दरूपाणां तिङ्सुबन्तचयानां, रसैः=श्रृङ्गारादिरसैः सहितः सरसः, तस्य भावः सारस्यं= आह्लादमयत्वं तदेव अर्थाः =वाच्यलक्ष्यव्यङ्ग्यरूपेण प्रतिपाद्यार्थाः, ते एव हंसाः, तेषां आकराः= निधयः, हंसाकरत्वं सरसां सुप्रसिद्धमेव । अम्ब ! एतत् = उपर्युक्तविशेषैर्विशिष्टं, सारस्वत्यं =वाङ्मयसम्बन्धि साहित्यसम्बन्धि, रसवद्वागर्थतनुसुन्दर्याः सरस्वतीदेव्याः सम्बन्धि, ते =तव, तत्त्वं =याथार्थ्यं मूलसाररूपं च तत्त्वं, अस्मान्=सर्वान्, विशत्=प्रविशत् सत्, अन्तर्बहिरावृण्वत् इत्यर्थः । अवतात् =रक्षतात् । लावण्यैकसरस्साम्येन लावण्यस्य साहित्यकारैः ध्वनिस्थानीयतया "प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनां यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु" इति ध्वनिकारादिभिः प्रतिपादितत्वात् मातुः सारस्वत्यं तत्त्वं स्वात्म- ध्वन्यात्मकमेवेति व्यज्यते । श्रुतिगम्यसौम्यपदसारस्यार्थहंसाकराः इत्यत्र 'सारस्यार्थ' शब्देन मातुः सारस्वत्यं तत्त्वं पार्यन्तिकतया नवरसरस्यात्मकं 'रसो वै सः' इत्युक्तमौपनिषदमिति अपि व्यज्यते । साधारणतया विमलसरसि कमलहंसाकरवत्वं तत्त्वम् । तदौपम्येन मातुः सुन्दरशरीरकरचरणहृदयमुखसंभाषणानां सरससरस्वतीतत्त्वं प्रकाशितमिति संभाव्यम् । मात्रभिन्नजगन्मातृपक्षेतु एवं समन्वयः संभाव्यः। लावण्यैकसरश्शरीरममलमित्यत्र लावण्यसरसि निर्मलत्वं जगत्पितुः शिवस्यैकस्यैव कामिक+ कामातीत श्रृङ्गाराकर्षणीयता , तदितराणां तु वात्सल्याकर्षणीयता चेत्यवगन्तव्यम् । पाणि– पाद–हृदय – मुखानां षण्णां कमलश्रीचक्रचिन्मण्डलस्य न केवलं मनो– व्योम –मरुद् – अग्नि –जल –भू तात्त्विकता (मूलाधारादीनां क्रमशः पृथिव्याद्यधिष्ठानत्वात्) अपि तु चिदानन्दस्वात्मश्रीचक्रता च संभाव्या । संलापाः= संभाषणानि, श्रुतिगम्यसौम्य पदसारस्यार्थहंसाकराः –श्रुतिगम्यस्य= वेदोपनिषद्गम्यस्य, सौम्यस्य= षोडशकलात्मकस्य, ॐकारगर्भितस्य उमामहेश्वरसम्बन्धिनः, रसेन सहितः सरसः=आनन्दसहितः तस्य भावः सारस्यं =आनन्दमयत्वं, तदेव अर्थः=प्रयोजनं येषां, ते एव हंसाः =हंसमन्त्राः ' सोऽहं' रूपाः, तेषां

आकराः=निलयाः, तव संलापाः इत्यर्थः। अथवा श्रुतिगम्यस्य= वेदोपनिषद्गम्यस्य ॐ कारसहितस्य पदस्य= स्थानस्य, सारस्यं =“रसो वै सः” इत्युपनिषद्वचोगम्यमानन्दात्मकं एव, अर्थः=प्रतिपाद्यं येषां संलापानां, ते एव हंसाः= सोऽहं भावपूर्णाः हंसमन्त्राः, तेषां आकराः=निलयाः, जगन्मातृवचसां चिदानन्दात्मकतैव प्रकाशमाना वर्तते इति भावः । तदेतत्ते सारस्वत्यं=चिदानन्दरसात्मकत्त्वं, अस्मान् , विशत् =अन्तर्बहिराव्याप्नुवत् अवतात् =त्वद्भिन्नभावात् रक्षत्विति भावः। अत्र षट्चक्रशब्देन कुण्डलिनीप्रकाशितं जगन्मातुः मातुः सारस्वत्यं रसैकात्मकं तत्त्वं सुप्रकाशितमिति दिक् ।

**Nandini :-** अम्ब =Mother ! ते =your, अमलं शरीरं =tidy body, लावण्यैकसरः=the lake of exquisite beauty, तथा =in the same way, पाणी= your two hands, पादौ =your two feet, हृद्वक्त्रे =heart and face,षट् = these six organs, अनूनरागकमलश्रीचक्रचिन्मण्डलम् =It is a bunch of lotuses showing its bright richness through its attractive redness, संलापाः=conversations श्रुतिगम्य =sweet to the ears by their akinness to the Vedas, सौम्य =tender and serene(being in tune with Somakala or Omakaranada) पदसारस्यार्थ=words with their sweet meaning being replete with the chidananda rasa of the Ultimate, हंसाकराः=abodes of swans (abodes of Hamsamantrartha) ते=your, एतत्सारस्वत्यं तत्त्वं =this beautiful quintessence of the lake (the quintessence of the goddess of learning) of chidanandarasa(wisdom - joy), इह = In this world अस्मान् =us,विशत् =entering (into us), अवतात् =May it protect us and inundate us with the flood of divine joy.

Mother ! your body is itself a beautiful lake; your hands, feet, heart and visage are round lotus -groups in that lake. Looking from above, standing on the shore, the group of lotuses seem wheel-like and round. It is meant here that all these six organs are shining with the beauty of lotuses. Your tender and serene words are indeed the twitterings of swans. May this chidanandarasa enter us and protect us for ever.

Because of the words "Saraswatya" "shadanuna raga kamala Srichakra Chinmandala" " Sruthigamya soumya pada sarasyartha Hansakarah" used in the poem respectively in respect of Mother's tattwa, organs and words, some special purports are here perceived:-

"Saraswathi" -one which circulates, or one whose abode is

Brahmasarah. That which circulates and spreads everywhere is knowledge. Brahmasarah means the lake of knowledge which is in the Sahasrarachakra. Saraswathi, the embodiment of knowledge, makes this chakra her abode. Her true form is that of the Divine Mother. Hence the number six is denoting the six lotus-chakras and ultimately the six - chakra form of the Mother.

"Sruthigamya.......... Hansakarh" indicates that the Mother's words express that which is intended by the Vedas and Upanishads. Assuming the Hansa form, they express the Mother - aspect in its wisdom -joy form. In his Dhwanyaloka , Anandavardhanacharya says("Pratiyamanam.......... vibhathi lavanyamivanganasu") that 'lavanya' and 'dhwani' are attained through suggestion. In the same way, Lavanya-lake, the form of Divine Mother, is shown clearly through the words "Sruthigamya" and "Hansakarah". At the end, it is suggested that Mother's quintessence is what is here called "Saraswatya".

76. **शिवात्मा ते शाक्तं, तिलकमपि सौभाग्यमखिलं,**
**भ्रुवौ शारासन्यं , नयनमथ माधुव्रतमहो ।**
**समुन्नासा शौकं , करचरणमाब्जं , हृदनघं**
**महस्सारस्वत्यं सरसरसना संव्यशदयन् ॥**

**अन्व :–** अम्ब ! ते शिवात्मा शाक्तं, तिलकं अखिलं सौभाग्यं अपि, भ्रुवौ शारासन्यं, अथ नयनं माधुव्रतं, अहो समुन्नासा शौकं, करचरणं आब्जं, हृत् अनघं महः, सरसरसना च सारस्वत्यं संव्यशदयन् ।

**नन्दिनी :–** अम्ब ! ते शिवात्मा = शिव एव आत्मा शिवैकात्मेति यावत् । शाक्तं=शक्त्या =सत्त्वेन बलेन विशिष्टं, शिवैकात्मप्राप्तेः असाधारणशक्तिसाध्यत्वात् , संव्यशदयत्= प्राकटयदिति सामान्यार्थः । शिवायाः आत्मा शक्तिरूपिणी सती "शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं" इति श्रीशाङ्करवचनात् । शाक्तं दर्शनं =देवीदर्शनं प्राकटयदिति विशेषार्थः । ते, तिलकं=कुङ्कुमादिना फालभागे अङ्कितं सौमङ्गल्यचिह्नं, अखिलं =सकलं नास्ति खिलं यस्य तत् अविनाशि, नित्यमित्यर्थः । 'सौभाग्यं रूढ्या सौमङ्गल्यसंपत्, योगशक्त्या सुभगस्य भावः इति सौन्दर्यं प्राकटयदित्यर्थः । भगशब्दस्य सूर्यवाचकतया ('इनो भग' इत्यमरः) 'सौभाग्यं' सौरसम्बन्ध्यपि भवतीति सौरं दर्शनं प्राकटयदिति विशेषार्थः । भ्रुवौ=नेत्रयोरुपरि स्थिते वक्ररोमरेखे, शारासन्यं= शरासनस्य धनुषः संबन्धि लावण्यं प्राकटयदित्यर्थः । धनुर्विद्यां

प्राकटयदिति विशेषार्थः । अथ =ततः, नयनं =नेत्रं, उभौ नेत्रे इति भावः । माधुव्रतं =मधुव्रतानां भ्रमराणां संबन्धि लावण्यं प्राकटयत् । माधुव्रतं भैक्षं संन्यासं स्वात्मतत्त्वदर्शनं प्राकटयदिति विशेषार्थः । अहो ! इत्याश्चर्ये, ते, समुन्नासा= सम्यक् सुन्दरं यथा उन्नता नासिका शौकं =शुकनासलावण्यं, प्राकटयत् । शौकं =शुकप्रोक्तं भागवतदर्शनं प्राकटयदिति विशेषार्थः । ते, करचरणं= करौ चरणौ च अनयोस्समाहारः समाहारे एकवद्भावः । आब्जं=अब्जं कमलं तत्संबन्धिलावण्यं प्राकटयत् । अब्जः= चन्द्रः धन्वन्तरिश्च । " शंखे धन्वन्तरौ चन्द्रे पुंस्यब्जः क्लीबमम्बुजम् इति नानार्थसङ्ग्रहः"। तत्संबन्धिआब्जं चान्द्र-धान्वान्तरिक (चान्द्र-वैद्य) दर्शने इति विशेषार्थः । ते हृद् =हृदयं , अनघं =पापरहितं , महः=तेजः प्राकटयत् । निष्कलङ्कतेजःस्थानं ते हृदयमित्यर्थः । "तमसो मा ज्योतिर्गमय" इत्यौपनिषदं ज्योतिर्दर्शनं प्राकटयदिति विशेषार्थः, ते सरसरसना चापि, रसैर्मधुरादिभिष्षट्भिः शृङ्गारादिभिः नवभिः सहिताभिः सरसाभिः =रसवद्वाग्भिः आनन्दभरवाग्भिरित्यर्थः । ताभिर्युक्ता रसना रसज्ञा जिह्वा सरसवचश्शालिनी जिह्वाचापि, सारस्वत्यं = सरस्वत्याः वाचश्च संबन्धि कौशल्यं च संव्यशदयन् =प्राकटयन् । सरस्वान् समुद्रः तत्संबन्धि शास्त्रदर्शनं सामुद्रिकं च प्राकटयदिति विशेषार्थः । अत्र मातुः तत्तदवयवादिभिः प्रकटितानि औपम्यानि श्लेषेण शाक्तादिदर्शनविद्याशास्त्राणि बोधयन्तीत्यनेन मातुः दर्शनमयत्वं विद्यामयत्वं शास्त्रमयत्वं च व्यज्यते ।

**Nandini :-** अम्ब =Mother !, ते =your, शिवात्मा =Siva -form or Parvathi-form, शाक्तं =your possessing all powers (or the philosophy of Sakta), तिलकं अपि =your brow-dot, अखिलं =all (or indestructible) सौभाग्यं= saumangalya as well as beauty (subhagasya bhavah) or the philosophy of saura (Bhaga=Sun), भ्रुवौ =your eyebrows, शारासन्यं =the beauty of a bow [or the knowledge of archery–Dhanurvidya] अथ =afterwards, नयनं=your eye, माधुव्रतं = the beauty of a bee [or living on alms, a vow kept by a sannyasin] अहो =An exclamation indicating surprise and wonder, समुन्नासा= your beautiful nose, शौकं =the beauty of the nose of a parrot [or the philosophy of suka as expounded in Bhagavatam], करचरणं=your hands and legs, आब्जं =the beauty of lotuses 'abja' is Brahma–hence Brahmatattwa. In Namarthasamgraha, we read " sankhe Dhanvantarau chandre pumsyabjah Kleebamambujam" Hence "abja' can mean even moon. Dhanvantari, the king of doctors – therefore, 'aabjam' may stand for the philosophy of moon, and also of the science of medicine]. हृत् =your heart, अनघं महः=spotless brilliance, [jyothirdarsana -"tamaso

ma jyothirgamaya"] सरस रसना अपि = your articulating tongue, सारस्वत्यं =the skill of talking [or as 'saraswan' means the ocean it may mean the samudrika sastra or palmistry], संव्यशदयन्=are clearly and doubtlessly expressing.

Mother ! you were ever engrossed in the Spirit of Siva. This engrossment tells us of your all -powerfulness. Your brow-dot tells us of your beauty and saumangalya. Your brows manifest the beauty of the bow; your eyes, that of bees; your high nose, that of the parrot-nose; your hands and feet, that of lotuses. Your heart shows your spiritual brilliance. Your tongue exhibits all skills in constructing mind- capturing words and sentences.

The words – Sakta, Soubhagya, Sarasanya(Archery), Madhuvrata, Sauka, Aabja, Mahah, Saraswatya – used by the poet indicate that the body of the Divine Mother is replete with all Darsanas i.e. all Vidyas and Sastras.

77. **शिरश्शैवं, शाक्तं तिलकमरुणं फालफलके ,**
**मुखं चान्द्रं, सौरं नयनमपि, पाद्मं करपदम् ।**
**शरीरं वाज्रं मे जननि ! हृदयं वैष्णवमहो!**
**महस्सारस्वत्यं सरसरसना ते ह्यकलयन्॥**

**अन्व :–** मे जननि ! ते शिरः शैवं, फालफलके अरुणं तिलकं शाक्तं, मुखं चान्द्रं, नयनमपि सौरं, करपदं पाद्मं , शरीरं वाज्रं, हृदयं वैष्णवं, सरसरसना सारस्वत्यं अकलयन् अहो !

**नन्दिनी :–** मे जननि ! ते =तव , शिरः=शीर्षं, शैवं लिङ्गाकारत्वात् । शिवध्यानभरं सत् शिवपारम्यबोधनं शैवमतमपि अकलयत्= प्राकटयदिति अग्रेप्यन्वयः । फालफलके =फालभागे, अरुणं =कुङ्कुमारुणं, तिलकं =सौमङ्गल्यचिह्नं , शाक्तं= ज्ञानेच्छक्रियाशक्तिसमृद्धं शाक्तं=शक्तिपारम्यबोधनं मतं प्राकटयत् । मुखं चान्द्रं=चन्द्रसदृशं सत् चन्द्राङ्कं मतं प्राकटयत्। नयनमपि सौरं =सूर्यसदृशं तेजस्वि सत् सौरं मतं प्राकटयत् । करपदं=करयुगं चरणयुगं च (समाहारद्वन्द्वः) पाद्मं =पद्मसदृशं सत् पद्माङ्कं मतं , पद्मायाः= लक्ष्म्याः प्रामुख्येनोपास्यमानं मतं, महापद्मादिनवनिधिप्रधानं कौबेरं मतं शास्त्रं वा प्राकटयत् । शरीरं =तनुः, वाज्रं =वज्रसत्त्वं वज्रकान्ति च सत् वज्राङ्कमैन्द्रं मतं प्राकटयत् । हृदयं=स्वान्तं, वैष्णवं व्याप्रोति विश्वं सर्वमिति विष्णुः तद्वत् विशालं सत् विष्णुपारम्यबोधनं मतमपि प्राकटयत् । सरसरसना=रसज्ञा जिह्वा, सारस्वत्यं महः=वाङ्मयं तेजः, स्ववचोभिः प्रकाशयन्ती सती सरस्वतीपारम्यं सरस्वत्या सह

अभेदसंबद्धत्वात् ब्राह्मं प्रस्थानमपि च, अकलयन् = प्राकटयत् । जगन्मातुर्मातुः शीर्षादयः शैवादिप्रस्थानानि अर्थवैशिष्ट्येन स्वात्मैक्यतयैवप्राकटयन्नित्यर्थः । महाभारते लिङ्ग स्वरूपकथनावसरे "न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा" (8-14-227-235) इति निषेधकोटौ पद्माङ्क चक्राङ्क वज्राङ्क मतानामुल्लेखो भगवता व्यासेन कृतः । ब्राह्म – वैष्णव –ऐन्द्र-मतवाचकत्वं पद्माङ्कादीनामित्यभ्यूह्यम्। कल धातोः कवीनां कामधेनुत्वेन इष्टार्थबोधकतया अत्र प्रकटानार्थकता।

**Nandini :-** मे जननि =O my mother !, ते शिरः=your head, शैवं =engrossed in meditation on Siva (or the religion of the followers of Siva), फालफलके =on your brow, अरुणं तिलकं =kumkum red-dot, शाक्तं =reflecting forth all powers [or the religion of Sakti], मुखं =your face, चान्द्रं =moon-like [or the religion of followers of the Moon], नयनमपि =your eyes too, सौरं =sun-like [ or the religion of the followers of the Sun] करपदं =your hands and feet, पाद्मं =lotus-like [or the religion of Padmanka, or of Lakshmi or of Kubera, the possessor of all nine nidhis], शरीरं =your whole body, वाज्रं =strong like the Vajra [or the religion of Indra, the wielder of Vajra], हृदयं =your heart, वैष्णवं =all -pervading like Vishnu [or the religion of the followers of Vishnu], सरस रसना =your tongue, सारस्वत्यं महः=with the illuminating aura of knowledge [or the religion of Saraswati – Brahmi matham] अकलयन् हि =have expressed.

My mother ! All your organs by themselves are able and beautiful. Your head is the epitome of Sivajnana, i.e. it always thinks of the good of all creation. The kumkum dot on your brow is ably beautiful in attracting the ascetic Siva who had burnt Manmatha to ashes. Your face is beautiful like the Moon with the sixteen kalas. "Nayanam souramapi"- here, the word 'api' by its strength, suggests that the mother's eyes are emanating peace like Chandra towards good people and are harsh like the rays of the Sun towards bad people.

Your hands and feet are beautiful like the lotuses. Your body is very strong like the one built of Vajra. Your heart is wide like that of the all -pervading Vishnu. Your tongue is charged with the brilliance of sweet words–Sarasavak.

The words like Saiva, Sakta etc. used by the poet suggest to

us the oneness of all religions being the different organs of the Divine Mother. Saiva and Sakta are religions of Siva and Sakthi: Chandra and Soura are religions of the Moon and the Sun; Paadma and Vaajra are religions of Brahma and Indra; Vaishnava and Saraswatya are religions of Vishnu and Sabda Brahma. In Mahabharata, we read in the context of narrating the form of Siva Linga, "Na padmanka na chakranka na vajranka yatah prajaah linganka cha bhaganka cha tasmanmaheswari prajah" (8-14-225-227)

As all people have the insignia of either Linga or Bhaga, all are Maheswaras only. Hence the padma, vajra etc. are all religions having artificial marks, unnatural and deserve no respect. All these are in nishedhakoti, banned list.

In the previous poem, the mother's body was described as a replica of all sastras and philosophies. In this poem, we are told that her body is an embodiment of all religions.

78. मातस्ते मूर्तिरासीत् शिवरतसुमनोवाग्वपुर्योगराज्ञी
कर्षन्ती प्रेरयन्ती नवनवविकसच्चेतनां मय्यमन्दाम् ।
त्वन्मुक्त्या वीतसत्त्वो विषयविषधरैर्गाढसन्दष्टगात्रः
त्वत्स्मृत्यैवैनमार्तं विरचय सुचिरं जीविनं सत्त्वपूर्णम् ॥

अन्व :– मातः ! शिवरतसुमनोवाग्वपुर्योगराज्ञी ते मूर्तिः मयि अमन्दां नवनवविकसच्चेतनां कर्षन्ती आसीत् । त्वन्मुक्त्या विषयविषधरैः गाढसंदष्टगात्रः वीतसत्त्वः अहं अभवम् । आर्तं एनं त्वत्स्मृत्यैव सत्त्वपूर्णं सुचिरं जीविनं विरचय ।

**नन्दिनी** :– मातः! ते =तव, शिवरतसुमनोवाग्वपुर्योगराज्ञी =शिवे रतानि शेभनानि मनो -वाग् -वपूंषि= मनोवचश्शरीराणि, तेषां योगे=शिवमनोवचश्शरीरैस्सहयोगे राज्ञी=पट्टमहिषी, योगराट् साक्षाच्छिव एवेति अवगन्तव्यम् । तादृशी ते मूर्तिः=तवाकृतिः विग्रहः, कर्षन्ती =अस्मानाकर्षन्ती, मयि, अमन्दां = महतीं वेगवतीं , नवनवविकसच्चेतनां =नूतनूतनतया विकासमाप्नुवन्तीं, चेतनां=चैतन्यशक्तिं ज्ञानशक्तिं बुद्धिं, प्रेरयन्ती=प्रोत्साहयन्ती, आसीत्=पूर्वमासीदित्यर्थः । इदानीं तु त्वन्मुक्त्या =त्वत्त्यागेन तव मोक्षगत्या च, त्वत्सान्निध्ययोगा भावादित्यर्थः । विषयविषधरैः=प्रापञ्चिकसुखरूपैर्विषसर्पैः, गाढसन्दष्टगात्रः=गाढं यथा संदष्टं गात्रं यस्य सः, वीतसत्त्वः-वीतं =गतं, सत्त्वं =बलं प्राणशक्तिः यस्य सः। गतप्राणशक्तिः जीवन्मृतप्राय इति भावः । अहमभवमिति यथा पूर्वम् । अतो हेतोः आर्तं =तथा बाधितं, एनं

=एतं एवं परिदृश्यमानं, मां, त्वत्स्मृत्या एव =त्वत्स्मरणेनैव, सत्त्वपूर्णं=सतो भावेन सत्त्वेन बलेन प्राणशक्त्या च, पूर्णं =समग्रं पूर्णसच्छक्त्यात्मस्वरूपं अत एव सुचिरंजीविनं सुदीर्घायुष्कं च, विरचय= कारय । पूर्वं तव साक्षादाकृतिरेव नूत्ननूत्नविकसद्दीव्यच्चैतन्यदायिनी आसीत् इदानीं त्वत्स्मृतिरेव तादृशसचेतनदीर्घायुस्सत्त्वप्रदायिनी भूयादित्याशासे इति भावः।

**Nandini :-** मातः=Mother !, ते= your, शिवरत=immersed inSiva, सुमनोवाग्वपुः= of beautiful mind and body, योगराज्ञी= (she) is the queen of yoga (Siva is the king of yoga), मूर्तिः= your form, कर्षन्ती= attracting, मयि= in me अमंदां= quick-footed, नवनवविकसच्चेतनां प्रेरयन्ती आसीत् = it charges one with ever- new-blooming power of jnana, इदानीं तु = but now, त्वन्मुक्त्या = because you have left me out, विषयविषधरैःगाढसन्दष्टगात्रः= having been bitten deeply by the poisonous serpents of worldly pleasures, वीतसत्त्व (अभवं )= I have become too weak, एवं आर्तः=this afflicted fellow, त्वत् स्मृत्यैव= just by thinking of thee, सुचिरं जीविनं सत्त्वपूर्णं विरचय= make me strong and bless me with long life.

Mother ! you always engross yourself in Sivayoga. In that way, you have become the queen of Siva, the Yogaraja. That form of thine used to attract me and fill me with ever-new quick-flowing power - streams of knowledge. i.e. On just seeing you as the queen of Siva, the Yogarat, I used to be charged with the power of knowledge. But now you have forsaken me–hence, I am being bitten by the venomus serpents of wordly pleasures. I have thus become very weak, devoid of all vitality. Therefore I think of thee. Please do think of me and make me strong and complete with mental serenity, bodily strength and vital power.

79. **वात्सल्यबन्धना मूर्तिर्नित्यचैतन्यदायिनी ।**
**तया विहीनः कामादिबद्धो निश्चेतनोऽभवम् ॥**

**अन्व :–** अम्ब ! ते वात्सल्यबन्धना मूर्तिः नित्यचैतन्यदायिनी आसीत् । इदानीं तया विहीनः कामादिबद्धः निश्चेतनः अभवम् ।

**नन्दिनी :–** अम्ब ! ते वात्सल्यबन्धना=वात्सल्यमेव बन्धनं =बन्धः यस्या स्सा, तादृशी मूर्तिः= आकृतिः नित्यचैतन्यदायिनी आसीत् । इदानीं कामादिबद्धः= कामक्रोधाद्यरिषड्वर्गबद्धस्सन्, निश्चेतनः=चैतन्यरहितः ज्ञानप्राणहीनः, अभवम् =संवृत्तः तन्मम सर्वप्रथमरक्षणं त्वत्कर्तव्यमिति भावः॥

**Nandini :-** अम्ब =Mother !, ते =your, वात्सल्यबन्धना मूर्तिः=motherly

form shaped out of the bonds of affection, नित्यचैतन्यदायिनी (आसीत्) =(has become) the giver of indestructible consciousness, इदानीं =now, तया विहीनः=without that power of knowledge,कामादिबद्धः=having been bound hand and foot by the six dacoits of lust, anger etc. निश्चेतनः अभवम् = I have become unconscious, bereft of the life-blood of knowledge.

Mother ! your form is made of the mettle of motherly affection. Therefore it used to bestow eternal knowledge on us daily. But now that conduit is cut off. Therefore, I have been made captive by the six enemies of lust, anger, covetousness, infatuation, arrogance and malice. I have thus become unconscious, bereft of the lifeblood of knowledge. Protect me, O my mother ! by bestowing on me again that treasure of knowledge.

80. **चिदेकललिता लता तव तनुस्तटिद्भास्वरा**
**सदर्थशिवभावनासुदृढबद्धबीजाङ्कुरा ।**
**सुगन्धमधुसन्ततिप्रथितपत्रपुष्पोद्गमा**
**जनन्यवतु नस्सदा निखिलनित्यरस्यैः फलैः ।।**

**अन्व :–** जननि ! सदर्थशिवभावनासुदृढबद्धबीजाङ्कुरा सुगन्धमधुसन्ततिप्रथितपत्र पुष्पोद्गमा तटिद्भास्वरा चिदेकललिता लता ते तनुः निखिलनित्यरस्यैः फलैः नः सदा अवतु ।

**नन्दिनी :–** जननि ! सदर्थशिवभावनासुदृढबद्धबीजाङ्कुरा–सदर्थस्य =नित्यसद्वस्तुनः, शिवस्य =सदाशिवस्य, भावनया= निरन्तरभावनया सुदृढं यथा, बद्धौ=संप्रवृत्तौ बीजं अङ्कुरश्च यस्यास्सा । शिवो बीजं तद्भवना चाङ्कुरः, तद्वती लतातनुरित्युत्तरतोऽन्वयः । सुगन्धमधुसन्तति प्रथितपत्रपुष्पोद्गमा–सुगन्धमधुसन्तत्या = सुगन्धमधुवदाकर्षणीयसन्तत्या =पुत्रसन्तत्या, सुगन्धस्य परिमलस्य मधुनः च सन्तत्या=पारम्पर्येण अनुस्यूतप्रसारेणेत्यर्थश्च, प्रथितः=प्रकटितः पत्राणां पुष्पाणां च उद्गमः=उद्भवः यस्यास्सा । पत्राणां परिणामरूपस्यैव पुष्पत्वात् , स्वसुगन्ध मकरन्दप्रसरणैः स्वीयोत्पत्तिंसूचयतीत्यर्थः । तटित्=विद्युदिव, भास्वरा =द्युतिमती, चिदेकललिता =चिदेव, एकं =मुख्यं , तेन ललिता =सुन्दरसुकुमारा, सुन्दरी सुकुमारा चेत्यर्थः । तादृशी लता =ज्ञानानन्दसुन्दरवल्लीत्यर्थः । ते =तव, तनुः=विग्रहः, निखिलैः=खिलान्निवृत्तैः निर्गतं खिलं=नाशः येषां तैरितिवा, नाशरहितैरित्यर्थः । नित्यैः=नियतं भवद्भिः, सदा प्रवृत्तैरित्यर्थः। रस्यैः फलैः=रुच्यैः फलैः नित्यानन्दात्मकफलरूपैः, नः=अस्मान्, सदा =नित्यं, अवतु =रक्षतु ।

**Nandini :-** जननि =Mother !, सदर्थशिवभावना सुदृढबद्धबीजांकुरा=[the seed

is Siva; thinking of him is the offshoot. The embodiment of sat (Existence) is Siva] Deeply thinking on the ultimate purport of existence, you have formed into a offshoot of the Seed which is potential existence, सुगन्धमधुसन्तति प्रथितपत्रपुष्पोद्गमा =the shooting out of leaves and flowers, expressing their sweet smell, plentitude of honey etc, तटिद्भास्वरा=shining like the lightning, चिदेकललिता लता =a creeper of the powerful beauty of knowledge, ते तनुः=your beautiful creeper-like body formed of wisdom and pure consciousness, निखिलनित्यरस्यैः फलैः नः सदा अवतु= may we be protected and sustained by the mellifluous fruits of indestructible wisdom -consciouness.

Mother ! your body is the beautiful creeper of wisdom, which shines like the lightning. It has made the eternal form of Siva as its seed. The offshoot is your uninterrupted thinking on Sadasiva. i.e. your soul is Sivabija. This offshoot is your body. The plenitude of fragrance and honey which is acceptable to all, expressed out as leaves and flowers, is your offspring. Bless your offsprings to evolve themselves into mellifluous fruits of Siva - joy and protect them always from the canker of materialism.

81. तवाऽऽकल्पोऽनल्पः, पतिसुतसमुद्विग्नसुमनो–
महस्तल्पस्स्वल्पीकृतदिविजसर्वार्थसुरभिः ।
कथाकल्पस्सङ्कल्पित सुकृतसर्वव्रततते:
विकल्पः श्रीवाणीहिमगिरिसुतानामवतु नः ॥

**अन्व** :– जननि ! पतिसुतसमुद्विग्नसुमनोमहस्तल्पः स्वल्पीकृतदिविजसर्वार्थ सुरभिः सङ्कल्पितसुकृतसर्वव्रततेः कथाकल्पः, श्रीवाणीहिमगिरिसुतानां विकल्पः तव अनल्पः आकल्पः नः अवतु ।

**नन्दिनी** :– पतिसुतसमुद्विग्नसुमनोमहस्तल्पः= पत्युः सुतानां च समुद्विग्नानि= त्वरायुतानि अव्यवस्थितानि शोभनानि मनांसि एव सुमनसः= जाती कुसुमानि, तेषां महस्तल्पः तेजोमयशय्या। मातुराकल्पस्य =प्रसाधनस्य अलङ्करणस्य काम्यत्वेन पत्युराकर्षकत्वं, सुतानां दृष्ट्यादि प्रियत्वेन वात्सल्यतया साकर्षकत्वं च अवगन्तव्यम् । पत्युः काम्यत्वेन समुद्विग्नता पुत्राणां च सुललितमातृसान्निध्यप्रेप्सया समुद्विग्नता इत्यर्थः । स्वल्पीकृता=अल्पीकृता, दिविजानां =देवानां, सर्वार्थानां = सर्ववाञ्छितानां, सुरभिः = कामधेनुः येन आकल्पेन =प्रसाधनेन सः, देवमनुष्यादिभ्यस्सर्वेभ्यः वाञ्छितसर्वप्रदायक इत्यर्थः । सङ्कल्पितसुकृतसर्वव्रततेः= सङ्कल्पिता

नां = इदं करिष्यामीति हृदये निश्चितानां, सम्यक्कल्पितानामाचरितानां च, सुकृतानां =सुष्ठुकृतानां पुण्यानां च, सर्वव्रतानां= सकलानां, व्रतानां=इष्टसंवरणानां अनिष्टनिवारणानां सत्यनारायणव्रतादि कर्मणां, ततेः=समूहस्य कथाकल्पः = कथाविधिः । सत्यव्रतादिमाहात्म्यप्रकाशककथा-सदृशकथारूपः इत्यर्थः । श्रीवाणीहिमगिरिसुतानां -श्रियः = लक्ष्म्याः, वाण्याः = सरस्वत्याः, हिमगिरिसुतायाः=पार्वत्याः एतासां त्रयाणमित्यर्थः । विकल्पः=प्रतिरूपः प्रत्याम्नायः तत्कार्यसर्वस्वनिर्वाहक इत्यर्थः । तव अनल्पः पूर्वोक्तवैशिष्ट्येन महान् , आकल्पः=सुप्रसाधितो वेषः । नः=अस्मान्, अवतु=रक्षतु ।

**Nandini :-**जननि =Mother !, पतिसुतसमुद्विग्नसुमनोमहस्तल्पः = you are the shining bedstead for the flowers of the lovely emotions of your husband as well as of the flowery good minds of your children engrossed in your motherly love, स्वल्पीकृत= having been reduced, दिविज= of heavenly beings, सर्वार्थ=granting all the desires, सुरभिः= heavenly cow, संकल्पित= resolved, सुकृतव्रतततेः कथाकल्पः=performing in the enjoined defined manner the merit-milking vratas so as to avert all untoward things, श्रीवाणी हिमगिरिसुतानां विकल्पः= the (single) alternative for Lakshmi, Saraswathi and Parvathi , तव आकल्पः नः अवतु = may your well-adorned form protect us.

Mother ! your well-adorned form is great. It has become the divinely shining bed for the flowery emotions of your husband; it has also become the bed for the flowery minds of your children engrossed in your motherly love. In granting all desires, it has drastically reduced the greatness of the heavenly milch-cow which grants only the desires of the divine beings. Your form is the ideal one described in the auspicious vratakalpas which is enjoined to be worshipped by all those who wish to perform those vratas. In short, your form is the embodiment of Lakshmi, Sarswathi and Parvathi i.e. You have the capability to perform all their duties single- handedly. May this well-adorned motherly form protect us for ever.

82. आबद्धमुक्ताम्बरमम्ब ! ते मे
सर्वार्तिजातप्रशमैकसूत्रम् ।
यत्स्पर्शमात्रेण निवृत्तपीड-
स्सुप्तिं समास्थाय सुनिर्वृतोऽहम् ॥

**अन्व** :– अम्ब ! ते आबद्धमुक्ताम्बरं मे सर्वार्तिजातप्रशमैकसूत्रं अभवत् । यत्स्पर्शमात्रेण निवृत्तपीडः सुप्तिं समास्थाय अहं सुनिर्वृतः अभवम् ।

**नन्दिनी** :–अम्ब ! ते=तव, आबद्धमुक्ताम्बरं=शौचार्थं शुचिवस्त्रधारणात् पूर्वं आबद्धं=आसमन्तादालङ्कारिकतया, बद्धं=धृतं , मुक्तं च =शौचार्थं शुचिवस्त्रधारणाय, मुक्तं =विमुच्य, कुत्रचित् पृथक् निक्षिप्तं , अम्बरं =वस्त्रं मौक्तिकसंवीतं च वस्त्रं, मे =मम सर्वार्तिजातप्रशमैकसूत्रं– सर्वासामार्तीनां=बाधानां, जातस्य=तज्जन्यसमूहस्य एकस्याः आर्तेः अनेकार्तिजनकत्वादित्यर्थः । प्रशमः=निवृत्तिः एव, एकानि =मुख्यानि, सूत्राणि=तन्तूनि यस्य वस्त्रस्य तदित्यर्थः । वस्त्रस्य प्रतितन्तु मदार्तिसमूहनिवारकसामर्थ्यमासीदित्यर्थः । अथवा सर्वार्तिसमूहप्रशमाय एकंमुख्यं सूत्रं =सूक्ष्मोपायः आसीदित्यध्याहरः । यत्स्पर्शमात्रेण=यस्य शुचिव्रताय मुक्तस्य वस्त्रस्य, स्पर्शमात्रेण =केवलस्पर्शेनैव, निवृत्तपीडः=स्वयमेवापगतसर्वबाधावान्, अहं =शिशुप्रायः बालप्रायश्च अहं, सुप्तिं गाढसुखनिद्रां, समास्थाय =संपूर्णतया प्राप्य, सुनिर्वृतः= सुष्ठु सुखितः अभूवमिति शेषः । अत्र आबद्धमुक्ताम्बरशब्दः–आबद्धं =कर्मपरिपाकेन प्रथमतः गाढं बद्धं, अनन्तरं मुक्तं=स्वात्मावबोधेन मुक्तं =संसार बन्धविमुक्तं इव स्थितं, अम्बरं= सच्चिदानन्दनिद्रासमाधिसन्धायकतया चिदम्बरमिव स्थितं वस्त्रं –इत्यर्थं प्रतिपादयति। तदानुगुण्येन तस्य वस्त्रस्य सर्वार्तिप्रशमनसमर्थत्वमपि प्रतिपादितम्। ततः तत्स्पर्शेन सङ्गेन च पीडानिवृत्तिपूर्वकं सच्चिदानन्दनिद्रासमाधिप्राप्तिफलमपि मया शिशुना बालेन च अनुभूतमिति परमार्थो व्यक्तः। जगन्मातुर्मातुः आबद्धमुक्ताम्बरस्य एतादृशी शक्तिः । उत्सङ्गेस्तन्यपानेन, यावद्रात्रिं सहसुप्त्या च संप्रसक्तस्य मातृदिव्याङ्गसङ्गस्य कीदृशी शक्तिःरिति अनिर्वचनीयमेव । अत्रेदं मम पैतामहं कौटुम्बिकं वृत्तं मन्मात्रैव प्रोच्यमानमासीत् । वयमाराध्यब्राह्मणशैवाः। तस्मादस्मत्पितृपितामहादयः शुचिव्रतेनैव अस्मन्मात्रादिभिः सम्पद्यमानेन पाकादिना, शिवपूजाविधिना च प्रातस्सायं नित्यशिवपूजां कर्वन्ति स्म । शुचिव्रतार्थमस्मन्मात्रदिभिः शुचि वस्त्रधारणाय तत्पूर्ववस्त्राणि विमुच्यन्ते स्म । शिशवः बालाश्च वयं तदा दूरतः परिहर्तव्या एव आस्म । तदा अतिमात्रं रुदतोऽस्मान्वीक्ष्य अस्मत्पितामहो वदति स्म किल–वधु! त्वदाबद्धमुक्ताम्बरं तेभ्यो रुदद्भ्यो दत्वा शुचिव्रतवस्त्रं धारय, यतस्ते तस्मिन्नेव त्वद्बुद्ध्या (मातृबुद्ध्या) सुनिभृतं निद्रान्ति – इति । अस्मन्मात्रा तावत् सर्वदा शुचिव्रतवस्त्रधारणाय तत्पूर्वमाबद्धमुक्ताम्बरमस्मभ्यः शिशुभ्यो बालेभ्यश्च पुत्रेभ्यः मदवधि दीयते स्म । सामान्यतः शिशुर्मातुर्वस्त्रं परिज्ञाय मात्राश्लिष्ट इव तस्मिन् सुखं स्वपितीति शास्त्रानुभूत्यविरुद्धमित्यलमति विस्तरेण । शुचिवस्त्रं =मडिचीर इति आन्ध्रभाषायाम् (सौळा वस्त्रं इति हिन्दी)

**Nandini :-**अम्ब =Mother !, ते =your, आबद्धमुक्तांबरम् =that saree

which was worn prior to the wearing of clean clothes not soiled by sundry touches, (that which was unworn for wearing those clean clothes), मे =to me, सर्वार्त्तिजातप्रशम +एकसूत्रम् =the threads of that saree have the important duty of completely breaking the trouble -bonds, यत् स्पर्शमात्रेण=with the touch of whose garment's hem, निवृत्तपीडः=having been freed from the worldly afflictions, सुप्तिं समास्थाय =going into deep sleep (of samadhi), अहं सुनिर्वृतः=I have made true happiness mine own.

Mother ! For the daily worship- rites performed by my father during the morning and evening, you used to keep ready the necessary articles-flowers, cleansed utensils used in worship, ghee-deepas, bilwas etc., after having prepared the prasada to be offered to Siva as a part of worship. During those periods, we, your children, were not allowed to touch you lest we should defile the whole process of worship. We could not bear the separation from you and used to weep incessantly during those periods. This used to be a source of great affliction to you as well as to us. To avert this , you, our parents had found out an ingenious and easy way out– that is what is described in this poem.

Knowing that I would weep without stop when you keep yourself away from us during the period of preparing prasadam, you used to keep in reach of us a saree you wore before wearing the clean, unsoiled clothes not defiled by sundry touches. On touching that sari, I used to feel your presence as well as touch and all my affliction used to fly way. I used to sleep then peacefully.

The words "Aabaddhamukta" and ' ambara' used in the poem, indicate the beings emancipated from worldly bondages, and the 'chidambara' –the 'space' of wisdom - consciousness. Other words of this poem also bend their meanings accordingly to co-ordinate with these extraordinary meanings. This suggests that the sari left there after wearing the unsoiled saree, is capable of emancipating us from the worldly bondages. Touching that cloth would lead us to the peaceful samadhi of sleep. The happiness that the child experiences while sucking milk because of the mother's body-touch is beyond description.

Here an age-old tradition of our ancestors seems noteworthy. We are Aaradhya Brahmana Saivas. Our ancertors used to perform Siva puja during six periods. During those times, the cleanliness and other observances were very strictly adhered to. For the performances of worship-rites by my father and grand-father, our mother and my father's mother used to wear clean, unsoiled clothes and prepare food etc. While this was going on, we, children, used to weep and my grandfather was reported to have indicated this method of appeasing us: to throw in reach of us the sari unworn by her. As soon as we were in touch with that saree, we used to stop weeping and even sleep peacefully till our mother came out after finishing off all the ordained chores. It is but natural that a child feels happy on touching that sari, which was earlier in contact with the mother's body. This is because of the affectionate vibrations that the saree carries along with it. The happiness that the child feels in the mother's lap beggars description as it is equal to the divine joy felt in the lap of the Divine Mother.

**83. परिकर्म तवाम्ब ! नो मनोज्ञं**
**गिरिजापूजनगन्धमाल्यबद्धम् ।**
**कनकोज्ज्वलगात्रभाभिरव्यात्**
**परिपुष्टं महतोऽपि सन्महीयः ॥**

अन्व :– अम्ब ! गिरिजापूजनगन्धमाल्यबद्धं कनकोज्ज्वलगात्रभाभिः परिपुष्टं महतोऽपि महीयः सत् मनोज्ञं तव परिकर्म नः अव्यात् ।

**नन्दिनी** :–अम्ब ! गिरिजापूजनगन्धमाल्यबद्धं –गिरिजायाः = गौर्याः, पूजनात् (अनुग्रहतया) लब्धं ,गन्धाः= चन्दनादिसुगन्धाः, माल्यानि =नव मल्लिकादिपुष्पमालाः एषां समूहः =गन्धमाल्यं (समाहारद्वन्द्वः) तेन बद्धं =केशपाशादिष्वलङ्कारतया बद्धं, कनकोज्ज्वलगात्रभाभिः =कनकवदुज्ज्वलाभिः शरीरकान्तिभिः, परिपुष्टं =सर्वाङ्गेषु पूर्णतया समन्ततः पुष्टं =पोषितं, अलङ्कृतमिति यावत् । महतोऽपि =पूज्यमानादपि (महपूजायां), महीयः सत्=अधिकतया विशालतया च सर्वत्र पूजनीयं भवत् सत् , मनोज्ञं =मनोहरं, तव परिकर्म =प्रसाधनं अलङ्कारः, नः= अस्मान्, अव्यात् = रक्षतु । ललितावृत्तस्य (I, III : स स ज ग II, IV स भ र ल ग) विषमवृत्तस्य गुर्वाधिक्येन (I, III = स स ज ग ग, II, IV स भ र ल ग ग) प्रवृत्तं किञ्चित् सुललितं नूत्नं विषमवृत्तं स्यादिति संभाव्यम् ।

**Nandini** :-अम्ब = Mother !, मनोज्ञं गिरिजापूजनगन्धमाल्यबद्धम्= your

beautiful hair-dress is adorned with the garlands that were used earlier for the worship of Parvati, परिपुष्टं कनकोज्ज्वलगात्रभाभिः= that has been heightened by the golden rays emanating from your body, महतः अपि महीयः सन् = more worshippable than all worshippables,तव परिकर्म = your personal decoration and toilet, नः अव्यात् = may it protect us.

Mother ! your hair-dress is adorned by the garlands used earlier for the worship of the Divine Mother, Parvathi. That adornment has been heightened by the natural golden rays emanating from your body. With the wearing of the flowers used for worship, you have become more worshippable than all worshippables. Here, other adornments like golden chains etc. are not mentioned at all to emphasize the fact that they are all artificial;.

**84. हरिचन्दनहारिद्रचार्चिक्यालङ्कृतं तव ।**
**लावण्यं सुतलोकैकपुण्यश्रीसर्वमङ्गलम् ॥**

अन्व :- जननि ! हरिचन्दनहारिद्रचार्चिक्यालङ्कृतं तव लावण्यं सुतलोकैकपुण्यश्रीसर्वमङ्गलं अभूत् ।

**नन्दिनी** :- जननि ! हरिचन्दनहारिद्रचार्चिक्यालङ्कृतं =हरिचन्दनमिश्रितेन हरिद्राचार्चिक्येन हरिद्रादिनिर्मितशरीरानुलेपनविशेषस्य सम्बन्धि चार्चिक्यं, तेन चार्चिक्येन =अनुलेपनेनालङ्कारविशेषेण, अलङ्कृतं = सुसमलङ्कृतं, तव= मम मातुस्तव, लावण्यं= सौन्दर्यं , सुतलोकस्य =सुतानां लोकानां च समूहः= सुतलोकं समाहारद्वन्द्वः तस्य, सुतानां लोकानां चेत्यर्थः । अथवा सुतानां=पुत्राणां, लोकस्य =जगतः जनस्य च (लोकस्तु भुवने जने इति अमरः) सुतजगतः सुतप्रपञ्चस्य चेति यावत् । परमेश्वरादन्येषां सर्वेषामपि मातृसुतत्वादिति भावः । एकस्य =मुख्यस्य, पुण्यस्य=इष्टान्तरजनकं विहितानुष्ठानजन्यं वा तस्य सत्कर्मफलस्येत्यर्थः । श्रियः= सम्पदः, सर्वमङ्गलं=सर्वेषां मङ्गलानामेकरूपं सर्वशुभप्रदमित्यर्थः। साक्षात् सर्वमङ्गलायाः गौर्याः स्वात्मस्वरूपमभवदिति भावः।

**Nandini :-**जननि =Mother!, हरिचन्दन=(mixed with) sandal - wood powder, हारिद्र =turmeric, चार्चिक्य =applications to the body, अलंकृतं =adorned, तव लावण्यं=your beauty, सुतलोकैकपुण्यश्री= the main merit - riches of your children and of all the worlds, सर्वमंगलं भवति = has become the very embodiment of all auspicious things, and in that way has assumed the very form of Parvathi who is all-auspicious.

Mother ! you used to apply to your body the paste of turmeric

mixed with the sandalwood powder. With that application, your bodily beauty assumed proportions which had made it the source of all auspiciousnesses for all beings. For us, your children, and for all the worlds, your beauty became, as it were, the very form of Parvathi manifesting in front of them, because of their good merits and your unconditional Grace.

85. हृदा शीर्षेणैवं सकलवपुषा रुग्णमिह मां
चिदानन्दश्रीकं निरुपमशिवानन्दगुणितम् ।
मदानन्दात्मं सत् त्रिपुटितमहो ! रूपमिह ते
सदा ध्यातुं शीघ्रं कुरु कुशलहृद्धीन्द्रियतनुम् ॥

**अन्व** :– अम्ब ! हृदा शीर्षेण सकलवपुषा इह रुग्णं मां चिदानन्दश्रीकं निरुपमशिवानन्द गुणितं मदानन्दात्मं सत् त्रिपुटितं ते अहो–रूपं ध्यातुं मां कुशलहृद्धीन्द्रियतनुं शीघ्रं कुरु ।

**नन्दिनी** :– अम्ब ! हृदा =हृदयेन, शीर्षेण=शिरसा, एवं सकलवपुषा=समस्तशरीरेण यावच्छरीरमित्यर्थः । इह =अत्र, रुग्णं =रोगग्रस्तं , रक्तप्रसारोत्पीडनकृतेन हृदयरोगेण, तत्कृतेनैव विस्मृतिभ्रमप्रमादादिकारणेन शिरोरोगेण, किं बहुना यावच्छरीरं व्याप्ताभिः सिराभिः मांसमज्जास्थिभिः चर्मणा च कृतैः शारीरिकरोगैश्च, ग्रस्तं=आक्रान्तमित्यर्थः। मां=तादृशमेतं तव पुत्रं मां, चिदानन्दश्रीकं =ज्ञानानन्द एव श्रीः यस्य तत् ते रूपमित्यस्य विशेषणम् । निरुपम शिवानन्दगुणितं–निरुपमः= अनुपमः, एकः स्वया अस्मज्जनन्या अनन्यः एकः इत्यर्थः। तादृशः शिवः=मम पिता शिवलिङ्गार्यः तदभिन्नस्सदाशिवश्च , तस्य आनन्देन = सदाशिवैकभावानन्देन, गुणितं=आनन्त्येन गुणितं ते रूपमित्यर्थः द्वित्रिचतुरादिरूपेण गुणकसंख्यायाः अनुक्तत्वात् । अथवा आत्मानन्दरूपं सदाशिवयोरानन्दरूपेण गुणितं इति भावः । ततः तदेव फलितरूपेण मदानन्दात्मं सत्= अहमेव आनन्दः मदानन्दः शैशवे आनन्दरूपत्वात् मदानन्द एव आत्मा= स्वं उभयैक्ययोगानन्दरूपं यस्य तत् , तादृशं भवत् सत् आनन्दरूपं त्रिपुटितं=माता-पितृ पुत्रानन्दत्रयसंपुटितं भवदिति अहो रूपं = आश्चर्य करं रूपम् । एवं च मातुरात्मानन्दः + पितुर्योगानन्दः =(पितृयोगानन्दः) । तदेतत्रयं हे मातः ! ते रूपे पुत्रानन्दसंभाविते त्रिपुटितं =त्रैरूप्येण संपुटितं सत् अनिर्वचनीयात्मैकवेद्यानन्दस्वरूपं साक्षाद्दृश्यमानतया संभाव्यते इति तात्पर्यम् । तादृशं ते संभावनामनोज्ञं रूपं सदा =नैरन्तर्येण नित्यं, ध्यातुं तदेकचित्तेन चिन्तितुं, शीघ्रं=अचिरमनुपदमेव , मां प्रथमोक्तविधया आध्यात्मिकाधिभौतिकाधिदैविकरोगरुग्णं मामित्यर्थः, कुशलहृद्धीन्द्रियतनुं - कुशलाः=निपुणास्सर्वसमर्थाः हृद् -धी – इन्द्रिय । तनवः-हृद् हृदयं , धीः=बुद्धिः अवगमाय-र निश्चयात्मिकान्तःकरणवृत्तिः प्रज्ञेति यावत् । इन्द्रियाणि = सविषयकज्ञानसाधनानि ज्ञानकर्मेन्द्रियाणि , तनुः=तन्यते विस्तार्यते इतितनुः विस्तरणशीलं शरीरमित्यर्थः एनास्तिसः

यस्य सः । तादृशं मां कुरु=विधेहि, जगन्मातुः मातुः सर्वात्मानन्दरूपस्य नित्यध्यानाय बुद्धीन्द्रियतनूनां रुग्णतया असामर्थ्यमाविष्टम् । तत्तेषां सर्वरोगनिवारणपूर्वकं सुसामर्थ्यमनुपदमेवानुग्राह्यमित्यभ्यर्थ्यते।

**Nandini :-** अम्ब =Mother !, त्वं =you, हृदा = with your heart (feeling), शीर्षेण= with your head (intellect), एवं =in its wake, सकलवपुषा=with all your body, रुग्णं मां =me, who has been beset with diseases, चिदानन्दश्रीकं =having the joy of wisdom as wealth, निरुपमशिवानन्दगुणितं =that which has been multiplied by the unparalleled joy of SadaSiva, मदानन्दात्मं सत् =(as a result) becoming the embodiment of my soul-joy, त्रिपुटितं =the joys of mother, father and son put together, ते =your, अहोरूपं (आहोपुरुषिकावत् ) =form which evokes astonishment, सदा =always, इह =here, in this world, ध्यातुं =to meditate on,शीघ्रं =quickly, मां =me, कुशलहृद्बीन्द्रियतनुं कुरु=make my intellect, organs of sense and knowledge, and body able and capable.

Mother ! I am now being afflicted by a kind of heart disease, loss of memory, vertigo, cramps in all the muscles of my body. Your form is one that shines forth eternally the beauties of the joy of knowledge- consciousnes. It has been reinforced with the unparalleled and indefinable soul–joy. The son's soul-joy is a product of the mother's and father's soul-joys. In a similar way , the soul-joy of the Universe is but a product of the soul-joys of the Divine Mother and Divine Father. The mother's soul-joy is a product not only of hers, but of the father as well as that of the son too. Hence it is said here that it brings out nothing but exclamations – it is a form of all joys put together. May this all-joy-form make my heart, intellect, body and all its organs diseaseless and capable in all ways of doing good to the world ! Through this the chidananda, Sivananda and my own joy weave themselves into one and thus become threefold (गुण= thread, to multiply.) I wish to meditate on thy astonishing beautiful form always. As sound meditation presupposes a sound body, I pray thee to make my body strong and proper to perform yoga -practices.

86. वत्सा मातरमेव शश्वदनुयात्याराद्भ्रमन्त्यन्ततः
तद्वन्मे मतिरम्ब! सर्वविषयेष्वद्यापि संभ्राम्यती ।
श्रान्ता त्वामनुयातु नित्यसुखदां शश्वच्चिदानन्दिनीं
सत्त्वश्रीभररम्यसौम्यसुमुखीं कारुण्यपुण्यप्रभाम् ॥

अन्व :– अम्ब ! वत्सा नित्यं आरात् भ्रमन्ती, अन्ततः मातरं एव अनुयाति । तद्वत् मे मतिः अद्यापि सर्वविषयेषु संभ्राम्यती श्रान्ता कारुण्यपुण्यप्रभां सत्त्वश्रीभररम्यसौम्यसुमुखीं चिदानन्दिनीं नित्यसुखदां त्वां शश्वदनुयातु ।

नन्दिनी :– अम्ब ! वत्सा =गोशिशुः, शश्वत् = पुनः पुनः " मुहुर्मुहुः पुनश्शश्वदभीक्ष्णमसकृत्समाः " इत्यमरः । आरात्=दूरे समीपे च "आराद्दूरसमीपयो" रित्यमरः भ्रमन्ती=परिभ्रमन्ती, अन्ततः= पर्यन्ते, मातरं एव=मातरं गां एव, अनुयाति=अनुगच्छति, तद्वत्=वत्सा इवेत्यर्थः, मे =मम, मतिः=मननशीलाबुद्धिः, अद्यापि =अस्मिन्वृद्धाप्येऽपि, विषयेषु = प्रापञ्चिकसुखेषु शब्दस्पर्श रूपरसगन्धादिनिमित्तेषु , संभ्राम्यती=सम्यगाश्चर्येण तत्परतया च भ्रमन्ती, श्रान्ता =श्रमं गता, कारुण्यपुण्यप्रभां-कारुण्यं= करुणैव, पुण्यं =सुकृतं तदेव प्रभा यस्याः तां कारुण्यरूपसुकृतस्य प्रभारूपामिति वा । सत्त्वश्रीभररम्यसौम्यसुमुखीं-सत्त्वं =रजस्तमसोर्लयस्थानीयं, त्रिकालाबाध्यं सद्रूपज्ञानहेतुतत्वं, सतो भावः । सत्त्वं =यथार्थतया ज्ञायमानमित्यर्थः । रजसो रागद्वारा दुःखहेतुत्वं तमसो ग्लानिद्वारा मोहवीजत्वम् । मोहदुःखलयस्सत्वमिति यावत् । तस्य सत्त्वस्य या श्रीः तस्याः भरेण=पूरेण अतिशयेन, रम्यं=मनोज्ञं, सौम्यं=चन्द्रसदृशं, शमगुणान्वितं सुप्रसन्नमिति यावत् । ॐकारज्योतिःप्रभाववच्च, मुखं यस्याः तां, चिदानन्दिनीं =ज्ञानानन्दमयीं अत एव नित्यसुखदां =शाश्वतसौख्यदायिनीं, त्वां=भवतीमेव , शश्वत् =सदा 'अभीक्ष्णं शश्वदनारते' अमरः । अनुयातु =अनुसरतु । वार्धक्येन मे मतिरतिचञ्चला त्वत्तो दूरमेव याति । तां त्वदनुगतामेव कुर्विति भावः । यथा च गोसमूहे वत्सा स्वमातरमेव गच्छति तथैव मन्मतिः बहुष्वपि विषयेषु भ्रमन्ती अपि त्वामेव गच्छतु इति भावः।

**Nandini :-** अम्ब = Mother !, वत्सा= cow's offspring, शश्वत् =time and again, आरात् =at near and far off distances, भ्रमन्ती=moving about, अन्ततः= at last, मातरमेव अनुयाति = it comes towards and follows the mother-cow, तद्वत् = in the same way, मे मतिः= my mind, अद्य +अपि = even now ( in my old age), विषयेषु= in worldly pleasures, संभ्राम्यती= moving about and being moved about , श्रान्ता = fatigued, कारुण्यपुण्यप्रभां =the brilliance of the merit of mercy, सत्त्व =of the serenity which is the dissolving place of all the three qualities, which is beyond the

present, past and future and which is the root of the quintessence of knowledge, श्रीभर =with the richness, रम्य =beautiful, सौम्य =placid, moon-like and of the primary vibration(Omkaratmaka) , सुमुखीं =having a handsome face, त्वां =you शश्वत् =always, अनुयातु =let it follow.

Mother ! the calf always follows the mother-cow even though it may be wandering nearby or far away from it. My mind, even during this old age, is still indulging in worldly pleasures and getting itself fatigued. You are one who is capable of giving permament and indestructible happiness; you are the embodiment of wisdom and eternal joy. Your face is rich with purity and serenity unsullied by the feverishness of desire-ridden activity and the lassitude of inertness it is handsome and wholesome like the moon and is pulsating with the primordial vibration, Om. O mother! Bless my world-indulging, fickle mind that it may follow thee as the calf the mother-cow and be emancipated from the shackles of the world.

**87. मनोज्ञा मे मातस्तव किमपि वात्सल्यलहरी–**
**परीवाहस्रोतःप्रसृतिरखिलाङ्गेषु प्रसृता ।**
**स्वभावश्रीपूरस्फुरितसकलात्माद्वयरसं**
**प्रमोदं मोदैकं प्रकटयतु सौम्यं शिवमहः ॥**

अन्व :– मातः ! अखिलाङ्गेषु प्रसृता मनोज्ञा ते किमपि वात्सल्यलहरीपरीवाहस्रोतः-प्रसृतिः मोदैकं प्रमोदं, स्वभावश्रीपूरस्फुरितसकलात्माद्वयरसं सौम्यं शिवमहः मे प्रकटयतु ।

**नन्दिनी** :– मातः! अखिलाङ्गेषु =समस्ताङ्गेषु, प्रसृता=प्रकर्षेण सृता, संपूर्णतया व्याप्तेत्यर्थः । मनोज्ञा=मनोहरा, ते=तव, किमपि=अनिर्वचनीया, वात्सल्यलहरीपरीवाहस्रोतः प्रसृतिः –वात्सल्यरसस्य लहरीणां= तरङ्गाणां, परीवाहः=जलोच्छ्वासः 'जलोच्छ्वासः परीवाह' इत्यमरः। तटाकादिषु सर्वतोमुखजलाधिक्ये सेतुरक्षणाय क्षणक्षणमुच्छ्रीयमाणानां जलानां स्वयं निर्गमनाय, सेतुप्रमादसूचिकायाः उपरितः सेतोः पार्श्वे खण्डं कृत्वा निर्मितः जलनिर्गममार्गः इत्यर्थः । महातटाकानां नदीनां वा सेतुबन्धेषु उभयपार्श्वयोः उच्छ्रीययमाणानां जलानां स्वयं निर्गमाय सेतुच्छेदेन कुल्यामार्गौ निर्मीयेते । तेन प्रधानसेतुः अचलः अप्रमादश्च (निराबाधश्च) भवति । अत्र मातृवात्सल्यलहरीपरीवाहः अनिरुद्धः समुद्वेलश्च भवतीति भावः, तस्मिन् जलोच्छ्वासे प्रसरमाणस्य स्रोतसः प्रवाहस्य प्रसृतिः प्रसरणं, सर्वतोमुखव्याप्ति (एषा कर्ता), मोदैकं =मोदः=सकलानन्दसामान्य आनन्दः एकः= मुख्यः, आत्मा यस्मिन् तत् ।

सकलानन्दसामान्येन आनन्देन एकं=एकीभूतमिति वा निर्विशेषानन्दनिलीनमित्यर्थः । अत एव प्रमोदं =प्रकृष्टानन्दरूपं, निरतिशयानन्द रूप (निर्गतः अतिशयः यस्मात्सः=निरतिशयः, स चासावानन्दश्च निरतिशयानन्दः तद्रूप) मित्यर्थः । सर्वोत्कृष्टानन्द इति यावत् । स्वभाव श्री पूरस्फुरितसकलात्माद्वयरसं-स्वस्य =मातुः, भावस्य=स्थितेः, अभिप्रायस्य, च स्वस्यात्मनो वा भावस्सत्ता "स्वभावाभिप्राय चेष्टात्मजन्मसु" अमरः । श्रियः =या श्रीः शोभासंपत्, तस्याः, पूरे=पूर्णे प्रवाहे पूर्णतया वा, स्फुरितः=विद्युद्द्योतितः विद्युदिव ज्ञानेन प्रकाशित इत्यर्थः । तादृशस्फुरितः सकलात्माद्वयरसः =सकलात्माद्वयरूपो रसः, सकलस्य आत्मा विश्वात्मा , तेन अद्वयः =अभिन्नः रसः= आनन्दः, कलाभिः= षोडशकलाभिः कलया चित्कलया च सहितः= सकलः, तादृशेन आत्मना =चिच्छक्तिरूपेण, अद्वयः= अभिन्नः एकीभूतः, रसः=आनन्दः यस्मिन् तत् । सौम्यं =शान्तं , सोमश्चन्द्रः सहस्रारकर्णिकारूपः कुण्डलिनी शक्तिरूपेण तद्गतमित्यर्थः। "अहमग्नि शिरोनिष्ठस्त्वं सोमशिरसि स्थिता । अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् " इति शिवपुराणे देवीं प्रति शिवोक्त्या सोमगतत्वमम्बायाः स्पष्टम् । श्री चक्रस्य सोमाभिन्नत्वात् तद्गतत्वमप्यम्बाया बोध्यम्। उमासहितस्योमेशस्य ॐकारगम्यस्य तत्त्वमप्यत्र अवगन्तव्यम् । तादृशं शिवमहः= शिवयोः= विशालाक्षीशिवलिङ्गाभिन्नयोः शिवाशिवयोः उमामहेश्वरयोः महः अभिन्नमद्वयमेकं तेजः, मे=मह्यं, प्रकटयतु= प्रकाशयतु । अत्र ब्रह्मानन्दवल्लीप्रतिपादितमानन्दमय कोशगम्यं मोदप्रमोदादिशब्दैर्व्यञ्जितम् ।

**Nandini :-** मातः=Mother !, अखिलांगेषु= in all the organs, प्रसृता =overflowing with parental affection, मनोज्ञा =mind-captivating, ते=your,किमपि =indefinable, वात्सल्यलहरीपरीवाहस्रोतःप्रसृतिः=the omni-directed circulating stream of parental love, मोदैकं =one whose sole end is joy, nothing but joy, प्रमोदं =in the form of sublime joy, स्वभाव =of motherly existence, or opinion, or of her soul, श्री =of the beauty or the riches, पूर=in the full flow, in its fullness,स्फुरित=shining like the light within, सकलात्माद्वय =one with the Over Lord, the power of knowledege, रसं = of joy, सौम्य= placid and peaceful, of the form of the moon, in the form of kundalini sakti resting in the thousand–petalled Chakra,किमपि=indefinable, शिवमहः= the light or the eternal effulgence of Sadasiva, मे प्रकटयतु = let it flash on me.

Mother ! The light of Sada Siva is of the form of Omkara; is of the form of Uma and Maheswara; it is of the form of the full-moon with all the sixteen kalas. It is thus at once of the form of the Linga as well as of the SriChakra. It has also become the all-joyful

digit of super-consciousness flashing in the forms of Linga and Sri Chakra. Ultimately, it has assumed the form of super-bliss. Mother! May that Siva-light flash on the screen of my mind inundated by the stream of your parental love flowing freely throughout my body.

88. दुहन्त्याः कावेरीं सुरभिमिव गां त्वय्युषसि तत्
पयोधारानादश्रुतिमनु समागत्य तरसा ।
मया नग्नस्निग्धप्रियललितगात्रेण शिशुना
समापीतं दुग्धं जननि तव पृष्ठे च लुठितम् ॥

**अन्व** :– जननि ! त्वयि उषसि सुरभिमिव कावेरीं गां दुहन्त्यां सत्यां,. पयोधारानादश्रुतिमनु नग्नस्निग्धप्रियललितगात्रेण शिशुना मया तरसा समागत्य दुग्धं समापीतं, तव पृष्ठे च लुठितम् ।

**नन्दिनी** :– जननि ! त्वयि उषसि =प्रातःकाले, सुरभिमिव =कामधेनुमिव स्थितामित्यर्थः। "कावेरीं " कावेरीनाम्नीं 'बेजगं वीरन्न' नम्ना वैश्यवरेण गोदानविधिना दत्तां अस्मत्पालितां च गां=धेनुं, दुहन्त्यां =स्वयं गोस्तनेभ्यः क्षीरं कलशे समाददन्त्यां (सति सप्तमी), तत्पयोधारानादश्रुतिं अनु – तस्याः = कावेर्याः, पयसां =क्षीराणां, धाराणां नादस्य, श्रुतिं =श्रवणं, अनु= अनुसृत्यैव, तरसा= वेगेन, समागत्य=सम्यक् यथोचितलालसपूर्णचित्तं यथा, आगत्य =समीपमेत्य, नग्नस्निग्धप्रियललितगात्रेण=नग्नं दिगम्बरं वस्त्रहीनसर्वाङ्गमित्यर्थः । स्निग्धं =सान्द्रं, प्रियं=वत्सलं, ललितं =सुकुमारसुन्दरं, गात्रं=वपुः यस्य तेन =तादृशेन, शिशुना=बालेन , मया, दुग्धं= मात्रा दुग्धं क्षीरं, मया स्वयं दुग्धं =मुखेन दुग्धं वा क्षीरं, पीतं=यावत्कालं मात्रा दुग्धं तावत् उदरंभरं पीतमित्यर्थः । तदनन्तरं , तव पृष्ठे =मातुः शरीरस्य पश्चाद्भागे, लुठितं=मम शरीरं तव पृष्ठ भागे परावर्तितं क्षीरमुखेनैवेत्यर्थः । अत्र मात्रा 'कावेरीक्षीरेषु दुह्यमानेषु तत् क्षीरधारानादश्रुत्यैव दिगम्बरेण शिशुना मया तत्र गमनं ततः दुग्धक्षीरस्य पानं, तदनन्तरं पुनर्दुहन्त्याः मातुः पृष्ठे, यथा मच्छैशवसर्वाङ्गस्पर्शानन्दानुभूतिरुभयोर्भवति तथा लुठितम् । क्षीरपानानन्तरं मातृपृष्ठलुण्ठनानन्दस्तावदुभयोरप्यनुभवैकवेद्यः अनिर्वचनीयः इति भावः ।

**Nandini :-**जननि =Mother ! उषसि =in the early morning, सुरभिं इव =like the wish-fulfulling cow, कावेरीं =our cow named Kaveri, दुहन्त्यां =while milking, तत् पयोधारा नादश्रुतिं अनु =following the sounds of the falling streams of milk (into the milk-can), तरसा =quickly,समागत्य =coming there to drink the milk, नग्नस्निग्धप्रियललितगात्रेण शिशुना मया =I, a

child, naked and with delicate, tender body, दुग्धं =milk, समापीतं =was drunk (by me) to the full, तव पृष्ठे च लुठितं =my rolling on your back.

Mother ! In our house, there used to be a black cow named Kaveri. It was for us so, to say ,a Kamadhenu. While it was with us, there was no dearth of any kind for us. You used to milk Kaveri every morning before the sunrise. I used to get out of my bed on listening to the inviting sounds of the streams of milk landing into the milk-can while you were milking and run to you with a glass. I used to drink sometimes the milk in the can and sometimes directly suck from the udder with my mouth. Afterwards, I used to roll on your back. The joy that we both used to experience during all this process was indescribable as it could be known only by those who experience it.

This is the experience I do remember clearly. The sight of children rolling on the back of their mother and the joy they derive from it is a common one. But while milking, if the child craves for the milk with a demanding perseverence, and after drinking the milk, if the child rolls on the back of the mother still milking the cow, that experience of joy is altogether different, excelling the foretold experience. If Ravi Varma were to have imagined it, he would have captured Sri Krishna and Yasoda Mai in this fascinating posture on his canvas.

**89. सर्वाङ्गस्पर्शसंफुल्लसर्वेन्द्रियसमुत्करम् ।**
**उभयानन्दकन्दं हि मधुरं शैशवं महत् ॥**

**अन्व :–** सर्वाङ्गस्पर्शसंफुल्लसर्वेन्द्रियसमुत्करं शैशवं उभयानन्दकन्दं महत् मधुरं हि ।

**नन्दिनी :–** सर्वाङ्गस्पर्शसंफुल्लसर्वेन्द्रियसमुत्करं = सर्वाणि च तानि अङ्गानि तेषां स्पर्शेन सम्यक् फुल्लं=विकसितं, सर्वेषामिन्द्रियाणां=ज्ञानकर्मेन्द्रियाणां मातापुत्रयोरुभयोः मनस्सहितानां त्वगादिज्ञानेन्द्रियाणां, वागादिकर्मेन्द्रियाणामित्यर्थः । तादृशानां तेषां समुत्करः समूहः यस्य तत्=शैशवं =बाल्यं, उभयानन्दकन्दं =उभयेषां, अनेकेषां मातापुत्रद्वयानामित्यर्थः । उभयशब्दस्य कैयटमते द्विवचनाभावात् । हरदत्तमते तु उभयोः =मातापुत्रयोः इति विवरणं सङ्गच्छते । आनन्दस्य =आह्लादस्य, कन्दं =मूलस्थानं सत् , महत् मधुरं हि = महामधुरमिति प्रसिद्धमेवेत्यर्थः । हि प्रसिद्धे, शैशवे मातृशिश्वोरन्योऽन्यसर्वाङ्गस्पर्शः अन्योन्यानन्दजनकतया अन्योऽन्यसर्वेन्द्रियविकासको भूत्वा महानन्दमूलकन्दो भवतीति भावः ।

**Nandini :-** सर्वांगस्पर्शसंफुल्लसर्वेन्द्रियसमुत्करम् = Because of the inti-

mate touch of the entire body, all the organs bloom out with joy, उभयानंदकंदं = the main root of the joys of both the child and the mother, मधुरं =sweet, शैशवं = childhood, महत् हि = indeed it is great.

Early childhood is the main source of the joys of both the child and the mother. Such joys of umpteen mothers and children shoot up, grow into creepers and bear flowers and friuts. Therefore the joy that the childhood bestows is sweet like the grapes. The joy which is atomic in the innocent child assumes huge proportions in the form of the Divine Motherly joy. A child deems all women as its mother; all the women deem a child to be a bestower of joy.

**90. शिवोऽकारो मातस्त्वमसि परमोकारमहिता**
**मकारो वां योगस्स्रवदमृतबिन्दुध्वनिमयः ।**
**स्वपत्यं तद्धयेतत्त्रितयमिह बाल्यं प्रणव इ-**
**त्युपास्यं सर्वेषां निरुपमचिदानन्दरसधिः ॥**

**अन्व :–** मातः शिवः अकारः । त्वं परमा उकारः असि । वां योगः स्वपत्यं सत् स्रवदमृतबिन्दुध्वनिमयः मकारः । तदेतत्त्रितयं बाल्यं इह निरुपमचिदानन्दरसधिः प्रणवः इति सर्वेषां उपास्यं हि ।

**नन्दिनी :–** मातः= जननि ! जगन्मातः ! च , शिवः=तव भर्ता शिवलिङ्गार्यः, सदाशिवश्च अकारः, भवतीत्यर्थः । परमा =उत्कृष्टा महेश्वरी, त्वं =विशालाक्षीमाता, जगन्माता च, उकारमहिता =उकाररूपेण पूज्या च, असि =भवसि, वां=युवयोः उमामहेश्वरयोश्च, योगः= त्रैकरणिकः मनोवाक्कायकृतः अर्धनारीश्वररूपश्च अद्वययोगः इत्यर्थः । स्वपत्यं सत् =सु+अपत्यं =शोभनं सन्तानं सत्, स्रवदमृतबिन्दुध्वनिमयः= स्रवतः अमृतस्य =आनन्दात्मनः, बिन्दुध्वनिमयः– बिन्दुना =रसबिन्दुरूपेण, ध्वनिना = सुश्राव्यनादेन च सर्वाङ्गीणं अन्तर्बहिःपूर्णतया व्याप्तः इत्यर्थः। मकारः=बिन्दुनादाभ्यां पूर्णरूपस्सन् 'म' काररूपः । आत्मनः आकाशस्य संभवात् आकाशगुणश्शब्दः सुसूक्ष्मनादरूपेण आत्मरूप-आनन्दरसबिन्दावेव निष्ठितः इति हेतोः परमात्मानन्दप्रतीकस्य अपत्यस्य बिन्दुनादमययोगात्मक 'म' काररूपत्वमिति भावः । तदेतत् त्रितयं = पितृमात्रपत्ययोगत्रितयरूपं बाल्यं, इह=अस्मिन् लोके, निरुपमचिदानन्दरसधिः= अनन्यज्ञानानन्दरसनिधिः, प्रणवः = ॐकारः, इति, सर्वेषां =अस्माकं विश्वजनानां च उपास्यं =उपासनीयं, हि आश्चर्यं आश्चर्यविषयत्वात् श्रद्धया अवधेयमित्यर्थः। (अहो हीति च विस्मये अम.) अ=पिता+उ=माता + म् बिन्दुः नादः=अपत्यं =ॐ एवं प्रणवप्राधान्येन पितृजगत्पितृस्तुतिरियम् । अस्यैवार्थस्य श्लोकान्तरितं रूपम् –

"शिवोऽकारः पिता माता ह्युकारश्शक्तिरूपिणी ।
मकारस्तद्द्वयीयोगबिन्द्वात्माऽपत्यमिष्यते ॥
तदेव त्रितयात्मं तु शैशवं प्रणवात्मकम् ।
तदुपासनमेवात्र परमानन्दनन्दनम् ॥"

शैशवस्य प्रणवात्मत्वोपासनं परमानन्दस्य ब्रह्मानन्दस्यापि नन्दनमानन्ददायि इत्यर्थः । ॐकारस्य मिथुनरूपता "ॐ इत्येतदक्षरमुद्गीथः तद्वा एतन्मिथुनं" इति छान्दोग्ये प्रतिपादिता। तदत्र यथासंभवमनुसन्धेयम् । तत्र ऋक्सामरूपौ वाक्प्राणौ ॐकारे मिथुनरूपेण प्रतिपादिता विति विशेषः । छां (1-1-5,6) एवमुत्तरत्र 91, 96 पद्ययोरपि छान्दोग्यऋक्प्रभावस्समुन्नेयः।

**Nandini :-** मातः=Mother!शिवः=Lord Siva (Sivalingarya), अकारः=the first syllable of Omkara, त्वं =yourself (Divine Mother, Visalakshi,) उकारमहिता परमा असि =the great worshippable form of उ– kara, the second syllable of Omkara, वां =of both of you, योगः=your ideational, mental and corporeal union; the Sivayoga which is a secondless merger as of Ardhanariswara,स्वपत्यं सत् =of the form of good offspring; of the form of the Universe, स्रवदमृतबिन्दुध्वनिमयः=that which is suffused with the joy-ringing sound, nectar- like to the ear, मकारः=the third syllable of Omkaram filled with Bindu and Nada, तदेतत् त्रितयं बाल्यं =this trinity of childhood – of father, mother and child, इह =in this world, निरुपमचिदानन्दरसधिः=the ocean of ineffable joy and wisdom, प्रणव इति =Omkara,सर्वेषां =for all the people of the world, उपास्यं =worshippable, हि=a matter evoking astonishment.

This poem instructs us to meditate on the trinity of father-mother-child (Divine Father -Divine Mother-Universe) as Omkara. The Father is अkara, the mother is उkara, the fruit of their joy-union the child, is the मkara (Bindu -nada ) –all the three put together form the Omkara.

Each being is an entity of particle-energy complex (Bindu and Nada); rounding up the prior parental okara (a+u) with his ma-kara (ma,) thus expressing himself as the Omkara– i.e. he assumes the form of the three joys of father, mother and child. Hence he also goes into wedlock to reproduce the species. The Veda also says: " tat sristwa tadevanupravisat" . The three syllables of a, u, and ma, merge into one in the long tail-sound of Bindu and Nada.

Therefore it is said that every sound has in it the vibrations of Omkara.

91. पिताऽकारस्तावच्छिव इह महाशक्तिरनघा
ह्युकारो माता, तद्द्वयसरसयोगस्सदमलः ।
मकारोऽपत्यं तत्त्रयजमिति बिन्दुः स्तुतिरियं
प्रणादो, विद्येयं प्रणवमयपञ्चाक्षरतनुः ॥

अन्व :– इह पिता शिवः तावत् अकारः, माता अनघा शक्तिरुपिणी उकारः । तद्द्वय सरसयोगः सदमलः मकारः । अपत्यं तत्त्रयजं बिन्दुः । तथा इयं स्तुतिः प्रणादः – इति इयं प्रणवपञ्चाक्षरतनुः विद्या उपासनीया ॥

**नन्दिनी** :– प्रणवपञ्चाक्षरीप्राधान्येन पितृ-मातृ– तद्योग-अपत्य-स्तुतीनां उपास्यतया संस्तुतिरियम् । पिता=शिवलिङ्गार्यः तदभिन्नस्सदाशिवः, तावत्, अकारः= प्रणवप्रथमांशरूप 'अ' कारतया उपास्यः । माता=जनयित्री अनघा पापराहित्येन पवित्रा, शक्तिः =शक्तिरूपिणी 'उ' कारः=प्रणवतृतीयांश 'उ' काररूपेणोपास्या । तद्द्वयसरसयोगः = रसेन=तन्मयानन्देन आत्मानन्देन सहितः, योगः=युक्तिः, सदमलः=सद्रूपेण अमलः =स्वच्छः, ' म ' कारः=प्रणवतृतीयां शरूपेणोपास्यः। अनेन पूर्वयोः शिवयोः योगस्य चिदानन्दयोगरूपत्वं व्यज्यते । एवं च प्रणवस्य अ+उ+म् अंशत्रयं व्युत्क्रमेण अन्ततः आदिपर्यन्तं आनन्द+चित् + सत् रूपत्वं गम्यते । वस्तुतस्तु सच्चिदानन्दरूपः प्रणवगम्यः परमेश्वरः, तत्र आनन्दप्रतीकस्य 'अ' कारस्य सदाशिवप्रतीकत्वं, चित्प्रतीकस्य 'इ' कारस्य शक्तिप्रतीकत्वं, सत्प्रतीकस्य 'म्' कारस्य शिवशक्तियोगप्रतीकत्वं च पर्युपास्यमिति भावः । अपत्यं =पुत्रो वा पुत्री वा, तत्त्रयजं= मातापितृयोगजं जगन्मातापितृयोगजं विश्वमित्यप्यर्थः । बिन्दुः= प्रणवचतुर्थांशतया उपास्यः इत्यर्थः। एवमेव इयं = मद्रचिता कवनरूपा स्तुतिः मातापितृरूपा जगन्मातापितृस्तुतिः । सद्रूपचित्रणया चिद्रूपप्रत्यायनद्वारा आनन्दरूप प्रकाशनं, प्रणादः, प्रणवपञ्चाक्षरीपञ्चमांशनादतया उपास्यः। अत्र प्रणादः अनुरागजशब्दः "प्रणादस्तु शब्दस्यादानुरागजः" इति अमरः । परमानुरागजशब्दत्वेनाऽध्यवसितः अनुरणितः निरन्तरानुस्यूतः शब्दः नादः यथा घण्टानादः । तथा ॐकारोच्चारणेऽपि अन्तिमकार्यस्य बिन्दुरूपता नादरूपता च सुगम्ये एव, इत्येवं अकार-उकार -मकार -बिन्दु -नादात्मकपञ्चाक्षरैरुपपन्ना इयं उपरि प्रतिपादिता भावना प्रणवपञ्चाक्षरतनुः= प्रणवस्य ॐकारस्य पञ्चाक्षररूपा तनुः= शरीरवती विद्या सूक्ष्मज्ञेया उपासनीया विद्या इति भावः । अस्यैव श्लोकान्तरितं रूपम् ।

**शिवोऽकारः पिता, माता ह्युकारश्शक्तिरूपिणी मकारस्तद्द्वयीयोगोऽपत्यं बिन्दुस्त्रयोद्भवम्॥**
**नादस्तुतिरियं, त्वेवं, प्रणवात्मैकसुन्दरी । पञ्चाक्षरी पराविद्या परमानन्दनन्दिनी ॥**

अत्र पित्रादिप्राधान्येन सदाशिवादिप्राधान्येन चेति उपासनात्रैविध्यं यथाकाम मनुसन्धेयमित्यनुमन्तव्यम् ।

पिता शिवः अकारः + माता शक्तिरूपिणी उकारः+तद्योगः सदमलः मकारः+अपत्यं विशवं बिन्दुः+इयं पद्यरचना स्तुतिः प्रणादः =इयं प्रणवमयपञ्चाक्षरीरूपा विद्या समुपास्या ।

**Nandini :–** पिता शिवः अकारः= Father Siva (Sivalingarya) is to be worshipped as अंkara अनघा माता उकारः= the holy mother (Visalakshi) is to be worshipped as उ, the second syllable of Omkara, अमलः तद्द्वयसरसयोगः मकारः=their pure joy-union is to be worshipped as ma, the third syllable of Omkara, तत् त्रयजं बिन्दुः = we all, who are a product of the trinity– the Divine Father-Mother –Universe, are to be worshipped as the tureeya स्तु Bindu, इयं सुतिः प्रणादः= This eulogy of mother -father made by me is worshippable as the fifth part– the Nada. (It is known that the end-syllable of Omkara pervades the universe as Bindu and Nada) इत्येवं , इयं = this five -syllabled word (a+u+m+bindu+nada), प्रणवपञ्चाक्षरतनुः विद्या= this Pranavapanchakshari is the subtle esoteric vidya (to be learnt as Brahmavidya)

The previous poem has instructed us to worship the trinity of father-mother-child as Omkara. This poem instructs us to worship the pentad of father -mother -their union - child- and this eulogy as one pranava panchakshari found in Siva Purana and other treatises.

**92. सदानन्दः पूर्णश्शिव इह पिता योगपरमः**
**चिदानन्दा माता प्रभवति च पूर्णा शिवकला ।**
**तयोर्योगस्सच्चिन्मयमहितपूर्णस्तत इमे**
**समादानाच्छिष्टा वयमपि च पूर्णाश्शिवतमाः ॥**

अन्व :– इह योगपरमः पिता शिवः सदानन्दः पूर्ण प्रभवति । माता शिवकला चिदानन्दा पूर्णा च प्रभवति । तयोः योगः सच्चिन्मयमहितपूर्णः । ततः समादानात् शिष्टाः वयमपि पूर्णाः शिवतमाः स्मः ।

**नन्दिनी :–** इह=अस्मिन् जगति, योगपरमः=योगे=शिवशक्तियोगे (न) परमः=श्रेष्ठः, पिता=जनकः, जगज्जनकश्च, सदानन्दः=सदात्मकानन्दवान् सन्, पूर्णः=संपूर्णः, प्रभवति= सर्वसमर्थो भवति । माता =जननी , शिवकला= शिवस्य कलारूपिणी, चिदानन्दा=ज्ञानानन्दात्मिका, पूर्णा =संपूर्णा समग्रा प्रभवति, तयोः= मातापित्रोः शिवकलाशिवयोः सच्चिदानन्दयोः योगः= ध्यानादिना एकी भावरूपः दाम्पत्ययोगश्च, संपूर्णस्समग्रश्चेत्यर्थः । ततः तादृशात् पूर्णात् समादानात्=सर्वस्वस्य सम्यगादानात् सम्यगवखण्डनात्, 'दो' अवखण्डने धातुः । अवदानेन जननात्, शिष्टाः =अनुशिष्टाः

सुशिक्षताः परिशिष्टाः, वयमापि,=वयं सर्वेऽपि, पूर्णाः= किञ्चिन्मात्रमपि लोपाभावेन संपूर्णास्समग्रा भवन्तः, शिवतमाः=अत्यन्तं शिवाः, स्म इत्यर्थः । माता पूर्णा, पिता पूर्णः, तयोर्योगोऽपि पूर्णः, तज्जनिताः वयमपि परिपूर्णाः एव । न च संकलनेन आधिक्यं, व्यवकलनेन च न्यूनता च दृश्येते । सर्वधा परिपूर्ण एवेत्यर्थः । पुत्रीपुत्रजननेन मातापित्रोः मनोवाङ्कायेषु न्यूनता, आधिक्यं वा, जनिते अपत्येऽपि च तादृशी न्यूनता आधिक्यं वा नैवाऽनुभूयेते । "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"– इति श्रुत्युपपत्तिरत्र यथोचितमनुसन्धेया । अस्यैव पद्यान्तरितं रूपम्-

**आनन्दैकरसः पूर्णः पिता योगेश्वरश्शिवः। परमानन्दरसिका पूर्णा माता महेश्वरी॥**
**आनन्दैकं घनं पूर्णं दाम्पत्यं शिवयोश्शिवम् । तदुदक्तं ह्यपत्यं च पूर्णमानन्दनन्दनम् ॥**

यथा च मातापितरौ करचरणादिभिः पूर्णौ तथैव तज्जनितास्सन्ततयोऽपि करचरणादिभिः पूर्णा एव भवन्ति । पुत्रजननेन पित्रोर्वा पुत्रेषु वा न्यूनाधिक्ये न भवतः। वटवृक्षात् अनन्तबीजवदनन्तफलोत्पत्त्या वटवृक्षस्य न किञ्चिदपि न्यूनत्वं दृश्यते – इति सर्वविदितम् ।

**Nandini :** – इह =In this world, योगपरमः=one who is adept in yoga, पिता =father, (Universal Father), शिवः = Sadasiva (Sivalingarya) सदानन्दः=ever-blissful, पूर्णः=perfect and full, प्रभवति =becomes capable of ,माता =(Divine) mother, शिवकला=being the kala form of Sadasiva, चिदानन्दा =being the form of joy and knowledge, पूर्णा प्रभवति =perfect and becomes capable of everything, तयोः योगः=their conjugal union brought about by their mutual penance, meditation etc. सच्चिन्मयमहितपूर्णः प्रभवति = Becomes capable of being perfect with existence -know–ledge- bliss,ततः= from that union, समादानात् =having brought all, शिष्टाः= (following them) having been taught by them, वयमपि= we too, पूर्णाः शिवतमाः= are perfect without any lacuna, are perfect embodiments of Siva.

Mother ! my father Sivalingarya being a great adept in yoga, was perfect and all-joyous. The Divine Father Siva is ever perfect blissful and untouched by the divisions of time. The Divine Mother, his consort, too is perfect and blissful. Their conjugal union too is perfect, divine and joyous. We, who are born of that union are also perfect and Siva-forms.

"Purnamadah purnamidam purnat purnamudacyate
purnasya purnamadaya purnamevavasishyate".

Adah= this Divine Father, Purnam=perfect (with external or-

gans and internal spirit) idam = this Divine Mother, purnam =perfect (with external organs and internal spirit)

Their physical and spiritual union is perfect and round with joy and wisdom. We, the world -people, who are born of it are also perfect with joy and wisdom. Here the motherly and fatherly pefections are not two – they merge into one perfect whole. Because of our birth from their union, there is no reduction in their perfection. Our perfection is also pure and full. The brightness of this joy is reinforced by its gradual evolution.

This poem may be deemed to be a commentary on the above Upanishad -mantra.

93. **विशालाक्षीपूर्वा परमशिवलिङ्गोत्तरतनुः**
**प्रजास्त्वेतास्सर्वा वयमिह तु सन्धिः प्रगुणिताः ।**
**त्रयीरूपामेतां जननि ! भवदीयां सुविहित–**
**प्रजार्थां संयुक्तिं परममहतीं चेतसि नुमः ॥**

**अन्व :–** इह तु विशालाक्षीपूर्वा, परमशिवलिङ्गोत्तरतनुः एताः प्रगुणिताः प्रजाः सर्वाः वयं सन्धिः, जननि ! एतां त्रयीरूपां सुविहितप्रजार्थां भवदीयां महतीं युक्तिं वयं चेतसि नुमः।

**नन्दिनी :–** इह तु =अस्मद्वंशे तु जगति तु , विशालाक्षीपूर्वा=अस्मन्माता विशालाक्षी काशीविशालाक्षी च पूर्वं रूपं यस्यास्सा अधिप्रजारूपा महासन्धिरित्यर्थः । परमशिवलिङ्गोत्तरतनुः, परमः=नित्यशिवार्चनोपासनादिभिः उत्कृष्टः, शिवलिङ्गः=शिवलिङ्गार्यः अस्मत्पिता परमशिवलिङ्गात्मको विश्वेश्वरश्च । स एव उत्तरतनुः= उत्तरं रूपं यस्यास्सा, एताः=वर्तमान तया परिदृश्यमानाः, प्रगुणिताः=अनेकपुत्रपौत्रादिरूपेण प्रवृद्धाः, प्रजाः=सन्ततिरूपाः, सर्वाः=समस्ताः विश्वप्रजाः वयं, सन्धिः = अधिप्रजासंहितायां सन्धिरूपाः इत्यर्थः । जननि= हे जनयित्रि अस्मन्मातः! एतां =उपरि वर्णितां ईदृशीं त्रयीरूपां–विशालाक्षीमातृपूर्वरूपां शिवलिङ्गार्यपित्रुत्तररूपां, अस्मात्प्रजासन्धिरूपां – इत्येवं रीत्या त्रयीरूपामित्यर्थः । सुविहितप्रजार्थां =सुष्ठु विहिताः= निक्षिप्ताः, प्रजाः=सन्ततयः जनाश्च, अर्थं = अधि प्रयोजनं यस्याः तां, भवदीयां =भवत्सम्बन्धिनीं, महतीं, संयुक्तिं =महासंहितां अधिप्रजारूपां, अधिलोकाधिज्यौतिषाधिविद्याधिप्रजाध्यात्मरूपासु पञ्चमहासंहितासु चतुर्थीमहासंहितामित्यर्थः। वयं सर्वे चेतसि =हृदये नुमः =संस्तुमः । एतदानन्तरिके महासंहिते अधिविद्या अध्यात्मिका च। तयो : प्रवचनं सन्धानं अधिविद्यासंहितायाम् , वाक् सन्धिः अध्यात्मिकायां संहितयाम् । एवं च एषा स्तुतिः वाग्रूपा सती अधिविद्याध्यात्मसंहितेऽपि क्रोडीकरोति। स्तोत्रस्य स्तुत्यप्रवचनवाग्रूपत्वादिति भावः । यथा च संहिताज्ञानं यशोब्रह्मवर्चस्सन्धायकं तथैव मातापित्रधिप्रजामहासंहितादिज्ञानं अनया स्तुत्या यशोब्रह्मवर्चस्सन्धायकमिति व्यज्यते। अस्यश्लोकान्तरितं रूपम् –

"विशालाक्षीपूर्वरूपा शिवलिङ्गमहोत्तरा
प्रजा वयं सुप्रजार्थसंहितां महतीं स्तुवे "॥

तैत्तिरीये शिक्षावल्ल्यां संहितोपासनाप्रकरणे पञ्चस्वधिकरणेषु पञ्चमहासंहिताः प्रतिपादिताः।

अधिकरणानि=अधिलोक -अधिज्यौतिष -अधिविद्य-अधिप्रज-अध्यात्मरूपाणि

पूर्वोत्तररूपे =पृथिवी + द्यौः,अग्निः + आदित्यः, गुरुः+शिष्यः, माता + पिता, अधर+उत्तरा हनू ।

सन्धिः = आकाशः-आपः -विद्या - प्रजा - वाक्

सन्धानम् = वायुः- वैद्युतः—प्रवचनम् -प्रजननम् - जिह्वा ।

**Nandini :** –इह =here (in our family ; in the world), विशालाक्षी पूर्वा =the former form is Visalakshi ( my mother; Divine Mother), परमशिवलिंगोत्तरतनुः=the latter form is Paramasivalinga Parmatman (my father : Divine Father), एताः प्रजाः सर्वाः वयम् , सन्धिः=we all of us, the offsprings form the 'Sandhi ' in the Praja samhita, जननि =mother, सुविहितप्रजार्था =having the only purpose of begetting proper progeny,भवदीया =your, महती संयुक्तिं =the above explained sublime samhita of progeny, नुमः=we praise.

In the Taittireeya Upanishad, five Mahasamhitas (Adhiloka, Adhijyothisha, Adhividya, Adhipraja,& Adhyatma) are described. It is said there that one who knows these will be blessed with good progeny, plenty of cattle, glow of wisdom, plenty of pleasing pabulum and heavenly abode.

Mother ! you have made the Adhiprajasamhita as all important. For this samhita, you as (Divine) mother is the former form, (Divine) father is the latter form: we, the progeny (the world), is of the union-form. If this prajasamhita is absent, all the other samhitas are futile.To the prajasamhita, therefore, I salute with all praise.

94. इडामालम्ब्याम्ब! प्रकटय सुधासारसरणिं
तथा पैङ्गल्याप्त्या कलय महसां राशिमनघाम् ।
सुषुम्नामुद्योत्य स्वयमखिलचिन्मूर्तिमहितां
कलालोलां नस्त्वां विलसितकुलस्वां तनु सदा ॥

**अन्व** :– अम्ब ! इडामालम्ब्य सुधासारसरणिं प्रकटय । तथा पैङ्गल्याप्त्या अनघां महसां राशिं कलय। सुषुम्नां स्वयं उद्योत्य अखिलचिन्मूर्तिमहितां कलालोलां विलसितकुलस्वां त्वां नः सदा तनु ।

**नन्दिनी** :– अम्ब ! इडां =वामनासिकास्थितां नाडीं सैव चन्द्रशीतलेति चन्द्रनाडीति कथ्यते । तां आलम्ब्य =आश्रित्य, सुधासारसरणिं=सुधायाः सारः चन्द्रः तत्सरणिं =चन्द्रमार्गं, प्रकटय =आविष्कुरु । अथवा सुधायाः=अमृतस्य, आसारः= धारासंपातः आसमन्तात्प्रसरणं, तस्य सरणिं =मार्गं च प्रकाशय इत्यर्थः । तथा =एवमेव पैङ्गल्याप्त्या =पिङ्गलानाडीप्राप्त्या दक्षिणनासिकास्थितसूर्यनाडीप्राप्त्या, अनघां=पापराहित्येन महतीं , महसां=तेजसां राशिं = मण्डलं सूर्यमण्डलमित्यर्थः । कलय = प्रकाशय, ततः सुषुम्नां =इडापिङ्गलयोर्मध्यगामिनीं ब्रह्मनाडीं मूर्धा (सहस्रारचक्रा) नुगामिनीं ,स्वयं=हे अम्ब ! त्वं स्वयमेवेत्यर्थः । उद्योत्य =समुज्जवलं प्रकाश्य, अखिलचिन्मूर्तिमहितां –अखिलया = खिलभावनाशून्यया संपूर्णया चिन्मूर्त्या=ज्ञानमयाकारेण , महितां=तेजोवत्पूज्यां, कलालोलां =कलाभिष्षोडशकलाभिः, 'अ' कारादि 'अः' कारान्ताभिः, षोडशभिः (16) 'अ' कारादि 'क्षः' कारान्ताभिश्च अष्टत्रिंशद्भिः (38) आलोलां = आसमन्तात् सक्तां, चञ्चत्प्रकाशमनोज्ञां षोडशीं पूर्णात्मिकामित्यर्थः, विलसितकुलस्वां= प्रकाशितकुलमार्गतात्त्विकस्वरूपाम् सुषुम्नोर्ध्वस्थितसहस्रारपद्मरूपं चन्द्रमण्डलरूपं वा कुलम् । तस्मिन् विलसितां, स्रवदमृतस्वस्वरूपां त्वां, नः सदा=निरन्तरं, तनु =प्रकाशय विस्तारय । अत्र कुलं =कुः पृथिवीतत्त्वं लीयते यत्र तत् कुलं = आधारचक्रं तत्सम्बन्धाल्लक्षणया सुषुम्नामार्गोऽपि , अतः सहस्रारात् स्रवदमृतं कुलामृतम् – इति भट्ट भास्करोक्तेः । तदेवात्र कुलस्वामित्युच्यते । अपि च स एव भट्टभास्करः ' कुलामृतैक रसिके'ति ललितासहस्रनामव्याख्योपाद्घाते – एवं च ब्रह्माण्डान्तर्गतं कुण्डलिन्याख्यं रूपं वक्तुमुपक्रमते– सा हि मूलाधाराख्ये चक्रे सार्धत्रिवलयाकारेण सुप्तासती योगियोगेनोत्थाय षट् चक्राणि ब्रह्मविष्ण्वादिग्रन्थींश्च भेदयन्ती सहस्रारं नीता सती तत्कर्णिकारूपचन्द्रमण्डलात् अमृतं स्रावयति" – इति कुलं विवृणोति । तेन कुलस्वामित्यस्य चन्द्रमण्डलस्वरूपामित्यर्थः । "कुलं शक्तिरिति प्रोक्त मकुलं शिव उच्यते । कुलेऽकुलस्य संबन्धं : कौलमित्यभिधीयते ।" इति तन्त्रोक्त्या कुलस्वामित्यत्र शक्तिशिवैक्यरसस्वरूपामित्यर्थः। स्वच्छन्दसङ्ग्रहे- "अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतं " इत्यार भ्य- "पङ्कजद्वयमीशानि ! कुलाकुलमयं शुभम्" इत्युक्त्या च सुषुम्नायाः अधश्चक्रं कुलं, ऊर्ध्वं चक्रमकुलम् । तेन मूलाधारात् सहस्रारमाव्याप्य एकरसस्वरूपमित्यर्थः । तेन लीलाविलसितकुलस्वामित्यस्य मूलाधारात् सहस्रारमभिव्याप्य विलासेनैव प्रकाशितशिवस्वात्मैकरसस्वरूपामित्यर्थः । तादृशीं, सदा=नित्यं , तनु=विस्तारय (लोण्मध्यमपुरुषैकवचनम्) सर्वात्मना प्रकशयेत्यर्थः।

अत्रेदमवधेयम् , शाक्ततन्त्रानुसारेण शिवः शक्तिः बिन्दुः- इति तत्त्व त्रयम्, शिवः शुद्धः

जगत्कर्ता, शक्तिः तस्य करणम्, बिन्दुः उपादानम्, बिन्दुरेव विशुद्धसत्त्वद्योतकः प्रकृतिः, शब्दब्रह्म, कुण्डलिनी, विद्याशक्तिरिति चोच्यते । शक्त्याघातेन बिन्दोः स्फुरणं, तस्मात् कलाः उत्पद्यन्ते । ता एव महाकाली महालक्ष्मी दुर्गादिरूपाः, बिन्दुरेव कुण्डलिनी शक्तिः, शक्तिर्नाम मूलकारणस्य शब्दस्य उन्मुखीकरणावस्था, शक्तेः ध्वनिः, ध्वनेर्नादः, नादान्निरोधिका, निरोधिकायाः अर्धचन्द्रः, अर्धचन्द्रात् बिन्दुः, बिन्दोः मूलाधार–स्वाधिष्ठान–हृदय–मुखेभ्यः परा –पश्यन्ती – मध्यमा –वैखर्यः शब्दाः 'अ' कारादि 'क्ष' कारान्तवर्णरूपेण ३४ कलाः समुत्पद्यन्ते

प्रकृते 'कलालोला' इत्यत्र कलाशब्दस्य 'अ' कारादि 'क्ष' कारान्तवर्णवाचकत्वं, तत्राप्यत्र चन्द्रकलापरतया 'अ' कारादि 'अः' कारान्तं षोडशवर्णकलावाचकत्वम् । अत्र प्रमाणम् :– शब्दोत्पत्तिप्रकारः राघवभट्टस्य शारदातिलके–

"स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः । मूलाधारे समुत्पन्नः पराख्यो नाद उत्तमः॥
स एवोर्ध्वतया नीतः स्वाधिष्ठाने विजृम्भितः । पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैश्शनैः॥
अनाहते बुद्धितत्वसमेतो मध्यमाभिधः, तथा तयोर्ध्वं नुन्नस्सन् विशुद्धौ कण्ठदेशतः॥
वैखर्याख्यस्ततः कण्ठशीर्षताल्वोष्ठदन्तगः । जिह्वामूलाग्रपृष्ठस्थः तथा नासाग्रतः क्रमात्॥
"कण्ठताल्वोष्ठकण्ठौष्ठ दन्तौष्ठा द्वयतस्तथा । समुत्पन्नान्यक्षराणि क्रमात् 'आ' दि 'क्ष' कावधि॥
आदिक्षान्तरतेत्येषामक्षरत्वमुदीरितम्" (राघवभट्टी शारदतिलक टीका पुटे ६0)

अकारादिक्षकारान्तवर्णेषु त्रयः प्रकाराः 1. सैम्याः 2 सौराः 3 आग्नेयाः, तत्र सौम्या श्चन्द्रसम्बन्धिनः सौरास्सूर्यसम्बन्धिनः, आग्नेयाः अग्निसम्बन्धिनः।

१. सौम्याः – " अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः" = १६ अत्र ह्रस्वाः अ इ उ ऋ बिन्दुः (0) पुंलिङ्गाः पिङ्गलानाडीस्थाः, दीर्घाः आ ई ऊ विसर्गः (ः) स्त्रीलिङ्गाः इडानाडीस्थाः, ऋ ॠ ऌ ॡ = नपुंसकाः सुषुम्नानाडीस्थाः । तथा च शारदातिलके –

"पिङ्गलायां स्थिता ह्रस्वाः इडायां संगताःपरे सुषुम्नामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः"

२. सौराः – कादयोमावसानाः स्पर्शाः क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म = २५

३. आग्नेयाः – य र ल व श ष स ह ळ क्ष =१0

चान्द्रीकलविभागस्तु अकारादिविसर्गान्तमेवम् :–

| | | | |
|---|---|---|---|
| 1. अं अमृता | 5. उं पुष्टिः | 9. ऌं चन्द्रिका | 13. ओं प्रीतिः |
| 2. आं मानदा | 6. ऊं रतिः | 10 ॡं कान्तिः | 14. औं अंगदा |
| 3. इं पूषा | 7. ऋं धृतिः | 11. एं ज्योत्स्ना | 15. अं पूर्णाः |
| 4. ईं तुष्टिः | 8. ॠं शशिनी | 12. ऐं श्रीः | 16. अः पूर्णामृता |

सौरीकलाविभागस्तु–कादिमान्तस्पर्शानां क्रमशः आद्यन्तवर्णयुगलमेकैका कला. अन्तिमानुनासिकस्य मकारस्य "तदन्त्यश्चात्मा रविः स्मृतः " इत्युक्तया स्वयं रवित्वात् तं

मकारं विहाय द्वादशकला देवी सहिताः यथा :–१२

| | | |
|---|---|---|
| 1. कं भं तपिनी | 5. ङं नं ज्वालिनी | 9. झं तं विश्वा |
| 2. खं बं तापिनी | 6. चं धं रुचिः | 10. ञं णं बोधिनी |
| 3. गं फं धूम्रा | 7. छं दं सुषुम्ना | 11. टं ढं धारिणी |
| 4. घं पं मरीचिः | 8. जं थं भोगदा | 12. ठं डं क्षमा |

आग्नेयी कलाविभागः देवीसहितः १0

| | | | |
|---|---|---|---|
| 1. यं धूम्रार्चिः | 2. रं ऊष्मा | 3. लं ज्वलिनी | 4. वं ज्वालिनी |
| 5. शं विस्फुलिङ्गिनी | 6. षं सुश्रीः | 7. सं सुरूपा | 8. हं कपिला |
| 9. ळं हव्यवहा | 10. क्षं कव्यवहा | | |

"तत्त्रिभेदसमुद्भूता अष्टात्रिंशत्कला मताः। स्वरैस्सौम्याः स्पर्शयुग्मैस्सौराः याद्य श्च वह्निगाः षोडश-द्वादश-दश संख्याकाः स्युः। क्रमशः कलाः (प्रपञ्च सारः 83 पटलः)"

मकारस्य रविरूपत्वे "अग्नीषोमात्मकः कामाख्यो रविः" शिवशक्तिसामरस्यात्मा जातः। तदुक्तं चिद्गगनचिन्द्रकायाम्।

"भोक्तृभोग्यमयगो विमर्शनाद्देवि मां चिदुदधौ दृढां दशाम्।

अर्पयन्ननलसोममिश्रणं तद्विमर्श इह भानुजृम्भणम् ॥

तदन्तश्चात्मा रविः स्मृतः प्रपञ्चसारे –

तदेवं 'अ' कारादि 'क्ष' कारान्तवर्णैरुपतपन्नायाः अस्याः मातृस्तुतेः। जगन्मातृकलास्वरूपत्वमेवेति तात्पर्यम्।

**Nandini :** अम्ब = Mother !, इडां = the moon–nerve named 'ida' passing into the left nostril, आलम्ब्य= taking its support, सुधासारसरणिं प्रकटय =rain the rain of nectar ( inaugurate the path of the nectar-stream), तथा= in the same way,पैंगल्याप्त्या= having the prop of the sun-nerve called pingala, passing into the right nostril, अनघां महसां राशिं कलय=make the blemishless brightness shine on me, ततः=afterwards, सुषुम्नां =the brahmanadi which passes into the thousand -petalled lotus in the head along the path between the Ida and Pingala nerves, स्वयं =O mother, you yourself, उद्योत्य=making it shine, अखिलचिन्मूर्त्तिमहितां =that which is to be worshipped as a form of pure consciousness, कलालोलां=shining mind-captivatingly with all the sixteen kalas, विलसितकुलस्वां =you, shining brightly as the quintessence of the kaula-

path, सदा नः तनु =may it be continuously spread in us for ever.

Mother ! Kindly possess the Ida- nerve and make the moon-path shine forth in me; possess the Pingala nerve and make the sun-path shine forth in me. Awaken the kundalini and make it pass through the sushumna-nerve running along the midway between Ida and Pingala nerves. Thus make thy full sixteen -kala ambrosial form shine forth in me always.

The sixteen kalas here denote the sixteen vowels from 'a' to 'ah'. In general, kalas are from 'a' to 'ksha.' 'kula' is that place where the earth-tattwa (kuh) is dissolved (liyate.) As this tattwa resides in the Muladhara chakra, this chakra is ' kula' . By imlplication, it means the path of sushumna. Nectar flowing from this chakra to the sahasrasa is called ' kulamrita'. This is how Bhatta Bhaskara explains the name "kulamritaikarasika" in his Bhashya of Lalitasahasranama. Here it is referred to as ' kulaswam'. In the introduction to the Namabhashya, Bhatta Bhaskara writes thus: " In the same way the seer is describing the form of Mahakundalini of the Brahmananda. This Mahakundalini sleeps with a coiled shape (in three and half coils), its tail being in its mouth. With the practice of yoga, it wakes up and travels upwards through the six chakras, breaking through the three knots of Brahma, Vishnu and Rudra, and reaches the sahasrara. There, occupying the mid-portion of the sahasrara- lotus ' which is Chandarmandala, it makes the nectar rain. (" Evam cha brahmaanandantargatam Kundalinyakhyam...... amritam sravayathi") This indicates that kulaswam means the Chandramandala.

"Kulam Saktiriti proktam akulam Siva uchyate. Kule akulasya sambandhah kaulamityabhidheeyatey" (Tantrokti) " Adhaschordhwam sushumnayah sahasradalasamyutam pankajadwayameesani ! kulaakulamayam subham. Sushumnaya adhahschakram kulam urdhwachakramakulam-" (summary made by the poet himself from the tantras). With these authorities, we understand that kulam means sakti, 'akulam' means Siva. The sweet compatability of Siva and Sakti is kaula. Taken in this way "kulaswam" also means the samarasya of Siva-Sakti. Below the end of sushumna, there is Muladhara. This is a lotus, also called 'kula'. At the other end of

sushumna we have the Sahasrara also called 'akula' lotus. The 'kula' merges into the 'akula' i.e. the kundalini wakes up and passes through the 'flue' of sushumna and occupies the pericarp called Chandramandala of the Sahasrara and makes the nectar flow. In other words being herself an ambrosial form, she makes all the path nectar-laden. She becomes thus 'kulamritaikarasika'. Thus 'Vilasitakulaswam' means that ambrosial tattwa which pervades from the Muladhara to the Sahasrara. May that nectar-exuding Sakti, pervade in us always.

According to the Sakta Tantras, there is a Trinity -Siva, Sakti and Bindu. Siva is pure and is the creator of the universe; Sakti is his instrument; Bindu is the material. Bindu itself is the expressor of pure sattwa. This has several names such as Prakriti, Sabdabrahma, Vidyasakti etc. With the pervasion of Sakti, the Bindu is activated to express the kalas. These kalas are Mahakali, Mahalakshmi and Mahadurga. The Bindu itself is Kundalinisakti. Sakti is the Sabda, its root cause, in its state of emergence. Dhwani, comes from Sakti, Nada comes from Dhwani; Nirodhika comes from Nada; Ardhachandra comes from Nirodhika; Bindu comes from Ardhachandrika. From Bindu, through the media of Muladhara, Swadhisthana,Manipura, Anahata etc. the word's four forms – viz, para, pasyanti, madhyama and vykhari – are born in the form of letters from 'a' to 'ksha'.

The word 'kala' in 'kalalolam' means this group of letters. In this group, the first sixteen from 'अ' to 'अः' are known as the sixteen kalas because of their affinity to Chandrakalas. The authorty for this statement is from Saradatilaka Teeka (p. 60) of Raghavabhatta "swatmeccha saktighatena.......... yeshamaksharatwamudeeritam" These letters (from 'अ' to 'क्ष' are of three kinds: (1) Saumyas (2) Sauras and (3) Aagneyas–the first being related to the Moon, the second to the Sun and the third to the Fire.

❖ (Detail of these may be seen in the Sanskrit Commentary.)

This eulogy of the Divine Mother being a form of the letters, groups of letters, sentences and poems is of the same form as that of the Jaganmatrkalaswarupa.

95. इडा नाडी माता मनसि महिता योगसरणिः
पिता सौरी साऽत्मन्यनुगतमहायोगसुगतिः ।
सुषुम्नैवापत्यं स्फुरितपरमानन्दरसधिः
त्रिमार्गेयं मातस्तव भवतु नो मोक्षगतये ॥

**अन्व** :– तव मनसि महिता योगसरणिः इडानाडी माता, आत्मनि अनुगतमहायोग सरणिः सौरी सा पिता, स्फुरितपरमानन्दरसधिः सुषुम्नैव अपत्यम् । मातः तव इयं त्रिमार्गः नः मोक्षगतये भवतु ।

**नन्दिनी** :– तव मनसि =चित्ते, महिता =तेजस्विनी, योगसरणिः=योगमार्गः चित्तवृत्तिनिरोधरूपः, इडा नाडी=वामनासानुगता चान्द्री नाडी इत्यर्थः, नड (ळ) ति वायुः रक्तरूपं सत् अस्यां सरन्ध्रायां गच्छति प्रसरतीति नाडी, माता=माति गर्भोऽत्र वर्तते इति माता, (मा माने वर्तने च' जननीत्यर्थः । योगमार्गानुगामिनी चान्द्री इडा नाडी माता जननी भवति । आत्मनि –स्वस्मिन् सच्चिदानन्दरूपे , अनुगतमहायोगसुगतिः = अनुसृतमहायोमार्गभूता, सौरी =सूर्यात्मिका, सा=नाडी , पिता =पातीति पिता, रक्षिता इत्यर्थः । मनोयुक्ता नाडी चान्द्री मातेति, आत्मयुक्ता नाडी सौरी पिता इति भावः। 'चन्द्रमा मनसो जातः' सूर्य आत्मा जगतः' इति वैदिकवचनात्, चन्द्रस्य मनः कारकत्वात् रवेः आत्मपितृकारकात्वाच्च ज्योतिश्शास्त्रे । स्फुरितपरमानन्दरसधिः=सद्यःप्रकाशितमहाज्योतिष्मद्विशालस्य आनन्दरसस्य निधानभूता, सुषुम्ना एव = इडापिङ्गलयोर्मध्यगता सुषुम्ना नाडी एव, ब्रह्मनाड्येवेत्यर्थः । अपत्यं =न पतन्त्यनेन पितरो नरक इति अपत्यं पुत्रीपुत्रात्मकं भवति । हे मातः तव इयं पूर्वप्रतिपादिता त्रिमार्गा=इडापिङ्गलासुषुम्नात्मिका योगशक्तिः, गङ्गेत्यर्थान्तरं, नः=अस्माकं, मोक्षगतये =मोक्षप्राप्तये, भवतु=सुसमर्था भवतु । यथा च त्रिमार्गा गङ्गा मर्त्यं मोक्षं गमयति तथैव तवयोगशक्तिरपि अस्मान् मोक्षं गमयत्विति आशंसनम् । पूर्वपद्ये अस्माकं योगमार्गे मातुरनुग्रहः प्रार्थितः । अत्र मातृयोगमार्गस्य अस्मासु अनुग्रहः प्रार्थितः इति विशेषः ।

**Nandini :** – मातः= Mother !, तव मनसि= in your mind, महिता=shining योगसरणिः= the yoga-path which extinguishes the waves of the mind, इडा = the moon-nerve ida, माता = (Divine) mother (mati vartatey garbhotra mata) आत्मनि =in yourself, the all-joy form, अनुगतमहायोगसरणिः=the good path of Mahayoga having been followed, सौरी सा =the sun-nerve, pingala, पिता =father (patiti pita), स्फुरितपरमानन्दरसधिः=the ocean of ecstasy, सुषुम्नैव =the Brahmanadi itself, अपत्यं =progeny [na patantyanena pitaro narakamiti apatyam; na patati (jagat)] हे मातः=O mother !, तव इयं त्रिमार्गा =this three-way flowing ganga of ida, pingala and sushumna, नः

मोक्षगतये भवतु =may it bestow on us liberation from all wordly bondages.

The Mother is a Mahayogini. Her idanadi- yogapath ( the path of the mind –moon – "chandrama manaso Jatah" ) is itself the form of the Divine Mother. Her pingalanadi - yogapath ( the path of the soul —'sun' –"surya atma jagatastasthushascha") is itself the form of father. The Sushumnanadi- yogapath is born of the union of the 'moon' and the 'sun' and is the path of the Brahman – this itself is the offspring –Universe. These three-nerve sakti-flow is the real Ganga, whose external form ( the river Ganges) hallows the Heavens, the Earth and the Netherland, and leads them back to the Paramataman. May this your Yogamayaganga lead us to eternal liberation from all worldly bondages.

In the previous poem, the poet has prayed the Divine Mother to make the 'moon', the 'sun' and the kundalini shine forth in us. Now, in this poem, the poet prays in a different way : May this tripathaga– Ganga emancipate us from the worldly bondages !

96. **इडा मातोकारस्त्वमसि निखिलालोकललिता**
**विशालाक्षी मात,श्शिव इह पिता पिङ्गलमयः ।**
**अकारात्मा चै,तद्रसपरमयोगैकनिलया**
**सुषुम्नाऽहं बिन्दुर्म इति प्रणवो नादपरमः ॥**

**अन्व** :– विशालाक्षीमातः ! इह पिङ्गलमयः पिता शिवः अकारात्मा अस्ति । इडा निखिलालोकललिता माता त्वं उकारः असि । एतद्रसपरमयोगैकनिलया सुषुम्ना अहं मः बिन्दुः अस्मि इति नादपरमः प्रणवः भवति ।

**नन्दिनी** :– इह =अस्मिन् लोके, विशालाक्षीमातः! पिङ्गलमयः= सूर्यनाडीमयः, पिता =जनकः, शिवः=शिवलिङ्गार्यः तदभिन्नस्सदाशिवश्च, अकारात्मा=प्रणवांश+अकारात्मकः, अस्तीति शेषः । इडा =चन्द्रनाडीरूपिणी, निखिलालोकललिता=समस्ततेजोभिर्मनोज्ञा, माता=जननी, त्वं=विशालाक्षीमाता तदभिन्ना जगन्माता च, उकारः=प्रणावांश 'उ' कारः असि, एतद्रसपरमयोगैकनिलया=एतयोः इडापिङ्गलानाडीरूपयोः पितृ–मातृरूपयोः जगत्पितृ–मातृरूपयोश्च, अकार उकार (अ+उ) योः, रसपरमः रसेन=परमानन्दरसेन ब्रह्मानन्देनेत्यर्थः ।, परमः=समुत्कृष्टः, योगः= संयुतिः आत्मेश्वरयोगश्च, तस्य एकनिलया =मुख्यनिवासस्थानं , सुषुम्ना=ब्रह्मनाडीरूपी, अहं=युष्मदपत्यरूपोऽहं, मः=प्रणवतृतीयांशः'म्' कारः बिन्दुः च प्रणवचतुर्थांशो बिन्दुश्च अस्मीति शेषः। इति एवं प्रणवः =ॐ कारः , नादपरमः= नादेन =प्रणवपञ्चमांशेन,

बिन्दोरनुरणनाकारेण शब्देन, परमः= सर्वपरमः प्रणवपञ्चाक्षरीरूपः विराजते इत्यर्थः। पूर्वस्मिन् पद्ये मातापित्रपत्यात्मनः इडापिङ्गलासुषुम्नानाडीत्रयात्मकता प्रतिपादिता। अत्र तु तदनुगततया प्रणवपञ्चाक्षर्यात्मता प्रतिपादितेति विशेषः। योगमार्गे प्रथमतस्सविकल्पोपासनं ततः शब्दात्मकमन्त्ररूपोपासनं, ततः प्रणवात्मोपासनं, तेन प्रणवनादसौक्ष्म्यलयेन निर्विकल्पसमाधिर्भवतीति तदनुगुणमेव पद्यत्रयेण मातृयोगसरणिः पुत्रादिभिस्स्वात्मीयतयोपासनीया वर्णितेति दिक्। 'अ' कार 'उ' कार 'म्' कार बिन्दु 'नाद' रूपिणी प्रणवपञ्चाक्षरी नमश्शिवायेति शिवपञ्चाक्षर्योस्सूक्ष्मरूपा शिवपुराणे कथिताऽत्रानुसन्धेया।

**Nandini :**– विशालाक्षी मातः=Mother Visalakshi ! इह =here in this world, पिंगलमयः पिता शिवः=father Sivalingarya, (who is in me of the form of Pingalanadi), अकारात्मा भवति =he is the form of अkara, the first syllable of pranava, इडा निखिलालोकललिता माता त्वं उकारः असि =you, mother, of the form of Ida-nadi, mind- captivating concentrated luminiscence, are the उ–kara, the second syllable of pranava, एतद्रसपरमयोगैकनिलया =the place of the conjoin of this pair ( of Ida and Pingala; of mother and father; of उ–kara and अ–kara) सुषुम्ना =the form of Brahmanadi, अहं =I, your offspring, बिन्दुः अस्मि =I am the म–kara of Pranava, इति प्रणवः नादपरमः भवति =Thus Omkara has become Nadabrahman. ( i.e. it has become worthy of worship).

In the previous poems, the worship of mata- pitri-santana in the three main nerves (ida -pingala- sushumna) is outlined, which is Savikalpa Upasana. Now in this poem, the worship of Omkara in these nerves is outlined.

In the path of yoga, an order of worship is maintained- Savikalpa Upasana, then mantropasana, and then pranavopasana. At the end, as the meditation prolonged on the subtle end–sound one goes into the Nirvikalpasamadhi. This gradual step-like worship is given in the above three poems.

**97. पिता सत्त्वं मातस्त्वमसि रज, अद्धा ! वयमपि**
**तमस्त्वन्तर्गूढप्रविमलरजस्सत्त्वगुणकम्।**
**तदेतत्तामस्कावृतिमपनुद स्वान्तररजो–**
**विमुक्तिश्रीयोगैर्निजशिवमहासत्त्वगतये॥**

**अन्व :**– मातः ! पिता सत्त्वं अस्ति, त्वं रजः असि, वयमपि अद्धा !

अन्तर्गूढप्रविमलरजस्सत्त्वगुणकं तमः स्मः । तत् (कारणात्) मातः ! निजशिवमहासत्त्वगतये स्वान्तररजोविमुक्तिश्रीयोगैः एतत्तामस्कावृतिं अपनुद ।

**नन्दिनी** :– पिता=जनकः, सत्त्वं=सत्त्वगुणः सतो भावः सत्त्वं विकृते कारणे सति चित्तस्य अविकृतिरूपः, लघुत्वे सति ज्ञानसुखहेतुरूपश्च भवतीत्यर्थः। त्वं =जननी त्वं, रजः=रजोगुणः, रञ्जयतीति रजः, प्रेरकत्वे सति सक्रियत्वे सति दुःखहेतुरूपं (एष मातुः प्राकृतिकः न तु पारमार्थिकः, असि=भवसि । वयमपि =युष्मत्पुत्राः वयमपि, अद्धा ! सत्यं वच्मीत्यर्थः 'तत्त्वेत्वद्धाञ्जसा द्वयम् ' अमरः । अन्तर्गूढप्रविमलरजस्सत्त्वगुणकं =अन्तर्निगूढौ, प्रविमलौ=शुद्धौ असंकृष्टौ, रजस्सत्त्वगुणौ=उपरिनिरुक्तौ यस्मिन् तत्=तादृशं तमः=तमोगुणः ताम्यते अनेनेति तमः, गुरुत्वे सति आवरकत्वे सति मोहकत्वरूपं (मोहहेतुरूपं), स्मः=भवामः। मातापितृयोगजन्यत्वात् आनन्दमयतया प्रविमलौ सत्त्वरजोगुणौ मायावृततया तमोगुणे निगूढौ भवतः इति भावः । इयं शैशवस्थितिः यौवनादिसंक्रामे तेष्वपि सत्त्वरजोगुणयोः प्रकाशः यथास्त्रीपुरुषप्रकृति भवतीति ज्ञेयम् । तत् =तस्मात्कारणात्, निजशिवमहासत्त्वगतये= निजस्य =स्वस्य "स्वके नित्ये निजं त्रिषु"अमरः, निजायाः=स्वस्याः भर्तुः च, शिवस्य=शिवलिङ्गार्यस्य तदभिन्नसदाशिवस्य च, महासत्त्वस्य= सर्वातिशायिमहासत्त्वगणात्मनः सदाशिवस्य, गतये = प्राप्तये प्राप्त्यर्थं, स्वान्तररजोविमुक्तिश्रीयोगैः–स्वस्याः = अस्मन्मातुः, अन्तरे प्रधानतया स्थितस्य, रजसः= रजोगुणस्य, विमुक्तेः त्यागात् तज्जनितायाः श्रियः = स्वस्याः आदिशक्त्याः, योगैः= संयोजनैः एतत्तामस्कावृतिं = एतद्दृश्यमानं अज्ञानांन्धतमसः आवरणं, अपनुद=निष्कासय येन सदा शिवश्रीसायुज्यं प्राप्नुयामित्यर्थः।

**Nandini:-** पिता =Father, सत्त्वं भवति = is of the form of sattvaguna (serenity) (that timeless quality by virtue of which one is not disturbed at all, even though there is enough cause to be so), मातः त्वं रजः असि =Mother ! you are of the form of rajoguna (activity) (that which makes one happy is rajas; it has become the inducing activity and therefore a cause of sorrow. ) This form is of Nature. Seen in the ultimate sense, the Mother is beyond all three qualities. वयमपि अद्धा अन्तर्गूढप्रविमलरजस्सत्त्वगुणकं तमः स्मः=we, your progeny, in sooth, are of the form of tamoguna, which has in its inner core the pure sattva, and rajas [tamas is that which afflicts ; it covers, it envelops, it infatuates] , तत् =because of this, निजशिवमहासत्त्वगतये =for discovering the pure sattvaguna (of our father) latent in us by uncovering ourselves, स्वान्तररजोविमुक्तिश्रीयोगैः=through the performance of

sattvayogas to liberate ourselves from the rajas, एतत् तामस्कावृतिं =this dark cover tamas eclipsing (our true self), अपनुद=(kindly) remove it (and make us merge with Sadasiva)

Mother ! All is a conglomeration of the three gunas. But the man when he becomes a father, he is a sattvika; the mother manifests outwardly the rajas. Ordinarily, the worldly mother, lacking farsight, shows proclivity towards the transient pleasures and entertainments: she tries to acquire and show off pompousness. The progeny is infatuated with everything. The mother tries to fulfil all the wishes of the offspring. The father, on the other hand, tries to do away with the very cause itself of the sprouting up of wants. The offspring wishes to make this effort futile.

But in the inner core of children, there will be in truth, only sattvaguna – therefore, we call them innocent. Mother ! Tear open this dark cover of tamas in us by shining forth the eternal beam of your inner sattvaguna and make us discover our own sattvaprakriti.

**98. शिशुत्वं काङ्क्षेऽहं यदनुभवति स्त्रीत्व अखिले**
**पवित्रं मातृत्वं, ललितरसलोकेऽम्ब ! सकले ।**
**शिशुत्वे मातृत्वं कलयति च यत् स्त्रीत्वमपि तत्,**
**पितृत्वे तन्मूले जगत इह तां नौमि पितृताम् ॥**

**अन्व :–** अम्ब ! ललितरसलोके सकले शिशुत्वे यत् (स्त्रीत्वं) मातृत्वं कलयति तत् स्त्रीत्वं काङ्क्षे, यत् अखिले स्त्रीत्वे मातृत्वं अनुभवति तत् शिशुत्वं अपि च काङ्क्षे । तन्मूले पितृत्वे तां जगतः पितृतां नौमि ।

**नन्दिनी :–** अम्ब! ललितरसलोके–ललितस्य=सुकुमारमनोज्ञस्य, रसस्य= ब्रह्मानन्दसब्रह्मचारिणः परमानन्दस्य, लोके=चिदानन्द जगद्रूपे , सकले =समस्ते दिव्यकलामये च, शिशुत्वे =शैशवे, यत्=स्त्रीत्वं, मातृत्वं = मातृभावं , कलयति =संभावयति , तत्=स्त्रीत्वमपि च , तादृशं स्त्रीत्वमपि च, काङ्क्षे =इच्छामि । यत् = स्त्रीत्वं , अखिले =समस्ते स्त्रीत्वे, मातृत्वं = जननीत्वं (मातृभावं) अनुभवति =याथार्थ्येन भावयति, तत्=तादृशं ,शिशुत्वं= शैशवं अपि च काङ्क्षे = इच्छामि, तन्मूले=तयोः=मातृत्वशिशुत्वयोः, मूले=आद्ये प्रतिष्ठाकारके

कारणरूपे (मूलप्रतिष्ठायां), पितृत्वे =पितृभावे, तां =सर्वयोग्यनुभवसिद्धां, जगतः= विश्वस्य, पितृतां=पितृभावरूपां धर्मधर्मिणो रभेदात् जगत्पितरमित्यर्थः। नौमि =प्रणमामि । अत्र मातृशिशुसम्बन्धः – "मातृत्वं शिश्वपेक्षं शिशुत्वं मात्रपेक्षं" इत्याकारेण प्रत्यक्षसिद्धः । अनयोर्मातृत्वशिशुत्वयोर्मूलकारणं पितृत्वं गम्यमेव । न च मातृत्वशिशुत्ववत् प्रत्यक्षसिद्धम्। तथाऽपि तादृशाय परमगम्याय पितृभावाय जगत्पितृभावाय च सांख्यीयेश्वरवत् अननुषक्ताय परमात्मरूपाय नम उक्तिः आदितः सर्वस्तुति पद्येषु निरुक्तापि सुप्रशंस्यैवेति भावः। एष एव भावः कविना श्लोकान्तरितः–

**"शिशुर्जगति सर्वास्तु मातृस्संमनुते सदा । सर्वा अपि शिशुं स्वात्मानन्दनं मन्वते खलु"॥**
**न जाया च पतिर्वाऽपि विद्यते सर्वदा शिशोः । मातैव केवलं सर्वा तस्य भावे भवोद्भवे"॥**

**Nandini:-** अम्ब =Mother !,ललितरसलोके शिशुत्वे = during the childhod which is joyful and attractive, यत् स्त्रीत्वं मातृत्वं कलयति = the womanhood and the motherhood which feels and experiences it, तत् स्त्रीत्वं (अपि च ) कांक्षे = I desire that womanhood, तन्मूले = that which is the root-cause (moola pratisthayaṃ) of the womanhood and the motherhood, पितृत्वे = fatherhood, तां जगतः पितृतां नौमि = I bow to that Divine Fatherhood.

Mother ! A child is tender,beautiful and joyful. It includes everything into its play. It itself is a world of joy. I wish to be that woman who feels and experiences the motherhood of such a child, but not a mere voluptuous lady. I also wish to be that child which feels all women to be its holy mothers. But I do not wish to be that entity which looks at woman as other than mothers. In this world, the motherhood and childhood are in everybody's direct experience. But fatherhood is not directly perceptible as the motherhood and childhood. It is implied and to be inferred. This inferrable fatherhood is a characteristic of the Universal Father too. I bow to that inferrable fatherhood i.e. I take my father as the Universal Father and bow to him.

९९. समूर्ध्वं मूलं त्वं जननि ! शिवबीजोद्भवघनं
ह्यधश्शाखास्सर्वे वयमपि प्रजास्सन्तातितताः ।
सुपर्णानिच्छन्दांस्यपि च शतसाहस्रगुणिता
न्यनन्तानन्दैकस्वरसफल आस्ते शिवतरुः ॥

अन्व :– जननि ! त्वं शिवबीजोद्भवघनं समूर्ध्वं मूलं असि , वयं अपि सन्ततितताः सर्वाः प्रजाः अधश्शाखाः हि, अपि च छन्दांसि शतसाहस्रगुणितानि सुपर्णानि । एवं अनन्तानन्दैकस्वरसफलः शिवतरु : (अश्वत्थइव) आस्ते ।

नन्दिनी :– जननि ! त्वं शिवबीजोद्भवघनं =शिवस्य =शिवलिङ्गार्यस्य तदभिन्न सदाशिवस्य, बीजस्य=आत्मावै पुत्रनामासीति न्यायेन, विशेषेण जायमानस्य; विशेषेण जायत इति बीजमिति व्युत्पत्तेः वि+ज =बीजं वबयोरभेदः । उद्भवे =उत्पत्तौ अङ्कुरीभवने च, घनं =सान्द्रं, समूर्ध्वं= अत्यन्तमूर्ध्वमुखेन व्याप्तं, मूलं=वृक्षाङ्कुरीभावसाधनं, वंशवृक्षप्रतिष्ठायाः करणमित्यर्थः । असि =भवसि । वयमपि, सन्ततितताः=सन्तत्या तताः =व्याप्ताः, सर्वाः प्रजाः=सर्वाः सन्ततयः, अधश्शाखाः=अधोमुखेन व्याप्ताः शाखाः, हि=अतिप्रसिद्धाः । अपि च =अतः परं, छन्दांसि=अभिलाषाः, शतसाहस्रगुणितानि = शतेन गुणितंनि साहस्रं शतसाहस्रं (१००० × १००=१०००००)लक्षात्मकमित्यर्थः। तेन लक्षात्मकेन गुणितानि गुण्यस्यानुक्तत्वात् अनन्तानीति भावः । सुपर्णानि शोभनानि पत्राणि भवन्तीति शेषः । एवं शिवतरुः = शिवलिङ्गार्यवंशवृक्षः । सदाशिवतरुश्च, अनन्तानन्दैक स्वरसफलः=अनन्तः अन्तरहितः नित्यः आनन्दः =ब्रह्मानन्दः, तेन एकः= अभिन्नः, स्वस्य=आत्मनः, रसः=आनन्दः येषां तानि =फलानि यस्य सः=शिवतरुः आस्ते=अविच्छिन्न अस्ते । अथवा अनन्तानि आनन्दैकस्वरसानि फलानि यस्य सः इति समासः, अत्र फलानामानन्त्यं व्यक्तम् । पूर्वत्र ब्रह्मानन्दसब्रह्मचारि स्वात्मानन्दरसफलवान् शिवतरुरिति विशेषः । अत्र "ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययं छन्दांसि यस्य पर्णानि यस्तं वेद सवेदवित्"। – इति वैदिकप्रतिपादितवृक्षस्य वंशवृक्ष परत्वेन समन्वयः । अत एव प्राचीनाः प्रथमं पिता, तस्य त्रयः पुत्राः तेषां प्रथमस्य त्रयः पुत्राः,द्वितीयस्य द्वौ पुत्रौ, तृतीयस्य चत्वारः पुत्राः–इत्येवं विधया ऊर्ध्व एकः मूलं, अधोऽधश्शाखाः पुत्राः पौत्राः प्रपौत्राश्चेत्यर्थवंविधया लिखन्ति ।

एषः शिवतरुः ऊर्ध्वमूलः अधश्शाखः पञ्चार्षेयः श्रीवत्ससगोत्रः आश्वलायनसूत्रः ऋक् शाखीयः । ।

एषः अस्माकं शिवतरुः ऊर्ध्वमूलः अथश्शाखः पञ्चार्षेय
श्रीवत्ससगोत्रीयः आश्वलायनसूत्रऋक्शाखीयः : –
प= { पत्नी पतिः
मूलम्पल्लि शिवलिङ्गय्यशास्त्री
(प. विशालाक्षी)
अम्बम्मा
(प.भद्रय्य)
मल्लिकाम्बा
(प.कुमारस्वामी)
राजमल्लय्य
नागमल्लशर्मा
(प.ललिताम्बा)
चन्द्रशेखरशर्मा
(प.प्रमीला)
गणेश्वरशर्मा
(प.हैमवती)
( प.कमला)
(प.जानकी)
(प.भवानी)
वैजनाथः
धूर्जटिशर्मा
श्यामला
वसुमती
मञ्जुनाथः
शिवकुमारशर्मा
(प.शारदा) (प.राणी)
नागराजशर्मा
(प.ललिता)
( प.अखिलाण्डेश्वरी)
(प.राजललिता)
(प.भुजङ्गराव्)
(प.नागमल्लिकार्जुनशर्मा)
नन्दिनी
वैष्णवी
विशालाक्षी
कमला
जानकी
मल्लिका
मानसा
राजशेखरः
मल्लिका
सोमशेखरः
(प. रविः)
(प.शरत्राय्)
लक्ष्मीप्रसन्ना
राजशेखरः
हिरण्मयी
किरणमयी
लास्यप्रिया
आकाश्
नागसेना
वसन्ता
राजेश्वरशर्मा
शङ्करशर्मा
भवानन्दशर्मा
(प.त्रिपुराम्बा)
चण्डिकाम्बा
(प.लिंगमूर्तिः)
उमाकान्तशर्मा
(प.अन्नपूर्णा)
शिवानन्दशर्मा
(प. प्रभावती)
विजया
(प. वीरेशलिङ्गः)
(प.केदारेश्वरः)
(प.नागलिङ्गशर्मा)
( प.अन्नपूर्णा)
(प.अपर्णा)
राजशेखरः
वीरभद्रः
उमा
(प.अमरनाथः)
कल्याणी
कौमुदी
श्रीकान्तसेनानी
भारविः
सांबशिवप्रसादः
भद्रय्य
राजकुमारः
कुमारस्वामी
रवीन्द्रनाथः
करुणा
श्रीदेवी
श्रीविद्या
सिद्धगणपतिः
(प.पद्मजा)
(प.रमादेवी)
(प.विजया)
(प.अरुणश्री)
शशाङ्कः
श्रीजा
नवीनः
गिरीशः
श्रीनिधिः
शशिधरः
(प. माधवी)
राजेश्वरः
( प.शारदा)
तरुणेन्दुशेखरः
(प.पद्माभवानी)
विश्वनाथः
(प.शुभा)
करुणश्री
(प.सूर्यकुमारः)
राजशेखरशर्मा
(प.अवनी)
अरुणश्री
(प.रवीन्द्रनाथः)
उदयश्री
तेजस्वी
सुमेधा
शरच्चन्द्रश्रीवत्सः
मनोज्ञा
आदित्यश्रीवत्सः
भार्गवी
श्रीहर्षः
सायिआदित्यः
श्रीनिधिः
शारदा
(प.राममोहन)
सावित्री
(प.गणेशः)
गायत्री
(प.सोमशेखरः)
भ्रमरा
( प.भास्करः)

**Nandini** :- जननि = Mother! शिवबीजोद्भवघनं =the firm and qualified seed -form of SadaSiva (of Sivalingarya) [according to the norm 'atma vy putranamasi'] ['viseshena jayata iti bijam'], समूर्ध्वं =spread upward, मूलं असि =you are the root - (that which makes a tree shoot up and stand firm), वयं + अपि =we too, संततितताः=spread through our progeny, सर्वाः प्रजाः=all children, अधः शाखाः हि =the down-spreading branches, अपि च =besides, छन्दांसि =our desires, शतसाहस्रगुणितानि =innumerable, सुपर्णानि =healthy leaves, एवं =in this way, शिवतरुः=the pedigree of Siva (Sivalingarya), अनन्तानन्दस्वरसफलः आस्ते =It is having as its fruits the ever-new uninterrupted soul- joy.

Mother ! It is said in Bhagavadgita "Urdhwamoolamadhassakhamaswatham prahuravyayam. cchandamsi yasya parnani-yastam veda sa Vedavith". We find in the world, tree having their roots towards the ground and branches spreading upwards; we never find a tree in the reciprocal configuration i.e. roots up and branches spreading downwards. Mother ! This Siva family tree is such a one of reciprocal configuration. Siva is the seed form; mother is the root form of that seed's offshoot. For us, both are entities of the upward region only.

We are in the region beneath theirs and spread into branches and sub-branches. Our innumerable desires are their leaves. (The spiritual desires may be thought of as the tender & attractive flowers) The fruits thereof are the eternal ever-new soul-joy experienced by the wise.

The Divine Father and the Divine Mother are the divine seed and Divine root of this universe- tree. The various worlds are its branches. The Divine Father's independent universal soul -joy is its fruit. The family-trees are also of this variety. We write first the ancestral father's name and then in down -shown branches, we give the names of his sons, grandsons etc. Thus it is a" root up and down branch " tree. Our pedigree is given below in the form of such a tree

100. आत्मानौ महतश्चराचरभरश्रीरम्यविश्वस्य यौ
स्वात्मानावपि भावितौ सुनिशितं सच्चित्सुखैकाकृती ।
तत्स्वात्माऽहमनन्तभानुमहसामात्मा तदानन्दनः
वैशालाक्ष इहाम्ब ! सर्वमननश्शैवश्च सर्वान्तरः ॥

अन्व :– यौ महतः चराचरभरश्रीरम्यविश्वस्य आत्मानौ भवतः तावेव सुनिशितं भावितं सच्चित्सुखैकाकृती स्वात्मानौ भवतः, तदानन्दनः, तत्स्वात्मा, अनन्तभानुमहसां आत्मा, इह वैशालाक्षः शैवश्च (शिवलिङ्गार्यपुत्र श्च) सर्वमननः सर्वान्तरः (सर्वात्मा) अहं अस्मि ।

**नन्दिनी** :– यौ, महतः, चराचरभरश्रीरम्यविश्वस्य –चराचरभरश्रिया= चराचरपूर्णसंपदा, रम्यस्य=मनोज्ञस्य, विश्वस्य =जगतः, आत्मानौ=मुख्यात्मानौ, भवतः, तावेव, सुनिशितं=सुतीक्ष्णं, संभावितौ सतौ, सच्चित्सुखैकाऽकृती=सच्चिदानन्दाकारकौ, स्वात्मानौ =स्वस्मिन्नेकीभूतात्मानौ, (एकी भूतः आत्मा ययोस्तौ) अपि, पुत्रानुरागवशादित्यर्थः भवतः। अहं =अहं तु, तदानन्दनः =तयोः=मातापित्रोः आनन्दनः=आनन्दयिता (संपूर्णपुत्रश्च मदानन्तरिकाभावात्)) सन् तत्स्वात्मा= तयोः स्वात्मा =स्वरूपः (बाहिररूपेण) मातापित्रोरेकात्मतारूपेण भवन् इत्यर्थः अनन्तभानूमहसां=अनन्तानां भानूनां =सूर्याणां, महसां=तेजसां, आत्मा=चैतन्यं च, भवन् , इह=अत्र भूलोके, वैशालाक्षः=विशालाक्षीपुत्रः, शैवश्च= शिवलिङ्गार्यपुत्रश्च शिवपारम्यदर्शनः, भवन्, सर्वमननः= सर्वभावुकः, सर्वान्तरः=सर्वान्तरात्मा "अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि" इति वैजयन्ती । सर्वात्मा भवामीति भावः । पुत्रेण पितरावेकात्मतां प्राप्नुवतः। तथैव पुत्रोऽपि मातापितृस्वात्मना एकात्मतां प्राप्नोति । ततः सर्वात्मभावं गच्छतीति सारांशः ।

**Nandini:-**यौ महतः चराचरभरश्रीरम्यविश्वस्य आत्मानौ (भवतः)=Those two who are the main Spirits behind the animate and inanimate riches of the universe , तावेव=they themselves, सुनिशितं सम्भावितौ सतौ =being

meditated upon deeply ,सच्चित् सुखैकाकृती= of the form of Sat, Chit and Ananda, स्वात्मानौ अपि (भवतः)=they, because of their love towards their children, develop oneness with their children, तदानन्दनः सन् (तद् +आनन्दनः) = I am the child bestowing on them the real, pure soul-joy. तत् स्वात्मा =I am in their form externally (internally, I am their merged form), अनन्तभानुमहसां आत्मा च (भवन्) =I am the superconscious form of the brilliances of countless Suns, इह =on this earth, वैशालाक्षः =(I am) the son of Visalakshi, शैवश्च भवन् =I am the son of Siva (Sivalingarya), [ I am the devotee of both Siva and Visalakshi] सर्वमननः=I ruminate on all that is, सर्वान्तरः(भवामि) =(therefore) I am omnipresent.

Mother ! This universe is beautiful with the moving and non-moving beings. You, who are the parents of such a universe, are of the form of Soul and Spirit. For me too, you are of the form of Spirit only. You have become one with me, having been engrossed with the love of the child. i.e. My external form is of your merged form, and my inner self too always thinks on you both. "Yadbhavam tadbhavati" – With this rule , my soul too has learnt that it is actually one with the eternal soul. I have thus become capable of shining bright with the brilliance of countless Suns and thus I have become omnipresent. But now in this present incarnation, I am born as the son of Visalakshi and Sivalingarya on the earth. (Another meaning is that " I have become a Saivaite possessed with Sakti") The powers of the Godhead are everywhere present in the Universe ("Tatsristwa tadevanu pravisat") The parents feel the putratmabhava, and the children also feel the pitratmabhava.

101. मनोवाग्देहैक्यस्रवदमृतसच्चिद्रसघन–
स्वयोगश्रीभ्यां नस्सुकृतसुफलाभ्यामविरलम् ।
प्रजास्वात्मानौ सच्चिदमलरसानन्दसुभगं
प्रपश्यद्भ्यां योगेश्वरपरशिवाभ्यां नतिरियम् ॥

अन्व :– मनोवाग्देहैक्यस्रवदमृतसच्चिद्रसघनस्वयोगश्रीभ्यां, नः सुकृतसुफलाभ्यां, अविरलं प्रजासु सच्चिदमलरसानन्दसुभगं स्वात्मानौ प्रपश्यद्भ्यां, योगेश्वरपरशिवभ्यां इयं नतिः भवतु.

**नन्दिनी** :– मनोवाग्देहैक्यस्रवदमृतसच्चिद्रसघनस्वयोगश्रीभ्यां–मनोवाग्देहानामैक्येन =एकीभावाप्त्या स्रवन्त्यः=प्रसरत्यः, अमृतेन=अमृतात्मकेन, सच्चिद्रसेन= सच्चिदानन्देन, आत्मज्ञानानन्दरसेनेति यावत् । घनयोः=सान्द्रयोः, स्वात्मनोः, योगश्रियः=दिव्ययोगलक्ष्म्यः (शोभाः) ययोः ताभ्यां, नः=अस्माकं सुकृतसुफलाभ्यां=सुकृतस्य=सत्कर्मणः पुण्यस्य सुफलाभ्यां= सत्फलरूपाभ्यां, अस्मत्सुकृतविशेषेणैव युवां अस्मन्मातापितरौ भवतः इत्यर्थः । अविरलं =निरन्तरं, प्रजासु=युष्मत्सन्ततिषु, सर्वेऽपि जगत्पितृसन्ततय एवेति भावः । सच्चिदमल रसानन्दसुभगं =निर्मलब्रह्मज्ञानानन्दसुन्दरं यथा भवति तथा । स्वात्मानौ=स्वरूपे (स्वस्वप्रकृती) प्रपश्यद्भ्यां= प्रकर्षेण समीक्षद्भ्यां, पुत्राणां मातापित्रैक्यरूपतायाः सहजत्वादित्यर्थः । योगेश्वरपरशिवाभ्यां= योगेश्वरी च योगेश्वरश्च योगेश्वरौ च तौ (परशिवा च परशिवश्च) परशिवौ च, ताभ्यां, अथवा, "योगेश्वरः = कृष्णः, यत्र योगेश्वरः कृष्ण" इति गीतावचनात्, तस्मादपि परौ शिवौ चक्रादिदानादित्यर्थः । अथवा योगेश्वरः=कृष्णः, परशिवश्च योगेश्वरपरशिवौ, हरिहरावित्यर्थः। ताभ्यां (उद्दिष्टाभ्यां) इयं नतिः=प्रणामः अस्तु । अत्र अस्मत्पित्रोः मनोवाग्देहैक्यं दाम्पत्यं, हरि–विरिञ्चि - हराणां त्रैमूर्तं एकत्रितं दाम्पत्यमिति । तच्च दाम्पत्यं तौ अस्मन्मातापितरौ सच्चिदानन्दरसघनं कुरुतः इति, अत एव तौ योगेश्वरपरशिवाभ्यामभिन्नतयैव संभाविताविति च तात्पर्यम् ।

"योगस्तावद्द्वयाश्रयः, स्वरूपावस्थितिहेतुचित्तवृत्तिनिरोधश्च । (स.ल. सं)" तज्जन्यफलानन्दादिफलंत्वेकीभाव एव । अतः प्रजासु पित्रोः (जगत्पित्रोश्च) आत्मदर्शनं "तत्सृष्ट्वा तदेवानुप्राविशत्' इति वैदिकानुव्यञ्जितमित्यवगन्तव्यम् । एतदेव श्लोकान्तरितम् –

**यावात्मानौ मदात्मानौ तदात्माऽहं चिदाकृतिः।**
**वैशालक्षश्च शैवश्च विश्वात्मानन्दनन्दनः ।।** इति

**Nandini:-** मनो वाक् + देहैक्यस्रवदमृतसच्चिद्रसघनस्वयोगश्रीभ्याम् = Those who have plenteous spiritual riches of yoga from which ooze the nectar of soul-joy produced by their oneness in mind, word and body, नः=to us, सुकृतसुफलाभ्याम् = The wholesome fruits of their merits, अविरलं = always, प्रजासु =in the case of this your progeny (the world is itself the progeny of the Universal parents), सच्चिदमलरसानन्दसुभगं = spotless and beautiful because of their wisdom and perennial joy, स्वात्मानौ प्रपश्यद्भ्याम् = looking at their own soul-images,योगेश्वरपरशिवाभ्याम् = To the Yogeswara and Para Siva (to them who are beyond the Yogeswara Srikrishna because of their be-

stowing chakra on Sri Vishnu; or to them who are of the form of SriKrishna and Parama Siva) इयं नतिः= this homage be unto them !

Mother ! your conjugal relations with my father are one in body, mind and word. This itself is a great yoga. It is replete with soul - joy and soul -wisdom. Your dampatya is rich with such an unparalleled yoga. This is the good and wholesome fruit of not only your mutual merits but also of your children's merits. Hence you are able to see the beauty of your soul-joy in your children i.e. you see us, your children, as the embodiments of your own soul - joy. This is your Yogeswara and Parasiva form, Yogeswara Paramasiva form; and Sri Krishna's form i.e. it is Harihararupa. To our Universal Parents who have assumed the form of our mundane parents, I pay this homage of eulogy.

**102. योगो वां पितरावमेयमहितस्सच्चिद्रसैकस्स्वयं**
**संपूर्णः परमः परापरिवृढः शैवस्वभावोम्भितः ।**
**तत्सारैकरसप्रपूर्णपरमा ह्येषा स्तुतिर्भाविता**
**विश्वं व्याप्य विशिष्यतां च सकलश्रेयःप्रदात्री सदा ॥**

**अन्व** :– हे पितरौ वां योगः अमेयमहितः, स्वयं सच्चिद्रसैकः संपूर्णः, परमः, परापरिवृढः, शैवस्वभावोम्भितः च भवति । तत्सारैकरसप्रपूर्णपरमा एषा स्तुतिः भाविता विश्वं व्याप्य सदा सकलश्रेयःप्रदा विशिष्यताम् ।

**नन्दिनी** :– हे पितरौ= हे मातापितरौ ! वां =युवयोः, योगः= आध्यात्मिकयोगः , (आधिभैतिकश्च) अमेयमहितः–अमेयः =इयानिति मातुमशक्यः, महितश्च =पूज्यश्च, स्वयं =इतरप्रेरणां विना स्वतन्त्रेण, सच्चिद्रसैकः= ब्रह्मज्ञानानन्दरसेन, एकः= अभिन्नः, संपूर्णः=समग्रः, अन्यून इत्यर्थः । परमः=सर्वविधया सर्वोत्कृष्टः, परापरिवृढः=परया- पराशक्त्या, परावाचा च, परिवृढः =वाच्य लक्ष्य व्यङ्ग्यैः सर्वाङ्गमालिङ्ग्य स्थितः सूक्ष्मः ॐकारस्फोटवाच्य इति भावः । शैवस्वभावेम्भितः =शैवस्वस्य=शैवसर्वस्वसारस्य, भावेन=स्थित्या, उम्भितः=समुज्ज्वलः, शिवलिङ्गार्यकुटुम्बतत्वसर्वस्वतया प्रकाशितश्चेत्यर्थः, भवति । तत्सारैकरसप्रपूर्णपरमा–तत्सारः= योगसारः स एव, एकः=मुख्यः, रसः=परमानन्दात्मकः रसः, तेन प्रपूर्णः= प्रकर्षेण संपूरितः । तेन परमा=सर्वोत्कृष्टा सती, एषा स्तुतिः=आनन्दनन्दिनीरूपा, भाविता =सर्वजनमनोभिर्भाविता सती, विश्वं=जगत्, व्याप्य=व्याप्तिं नीत्वा, सदा=नित्यं, सकलश्रेयःप्रदात्री – सकलानां = समस्तानां,श्रेयसां = सौख्यानां, प्रकर्षेण दायिनी, सकलायाः अकारादिक्षकारान्तकलारूपायाः पराशक्त्याः, श्रेयसः= सायुज्यरूपशाश्वतसुखस्य, प्रदात्री =मोक्षप्रदात्री सती, विशिष्यतां=सर्वोत्कृष्टेन संभाव्यतामिति भावः।

**Nandini:-**हे पितरौ =O parents !, वाम् =your, योगः=your spiritual and physical union, अमेयमहितः=immeasurably great and worshippable, स्वयं=by itself (without any external stimulus), सच्चिद्रसैकः=it is one with the soul-joy, संपूर्णः=full and round without any blemish, परमः=it is the greatest of all, परा परिवृढः= it is eneveloped completely by the Parasakti and Paravak, (it is the subtle Omkarasphotavachya), शैवस्वभावोम्भितः=it is brilliant having the quintessential state of Saivasarvaswa, ( it is expressed as the Sivalingarya kutambatattwasarvaswa), तत् सारैकरसप्रपूर्णपरमा =made perfect with the all -important quintessential soul-joy, एषा स्तुतिः=This eulogy of the mother (Anandanandini ), भाविता =being emotively experienced by all people, विश्वं व्याप्य =pervading all over the world, सदा =always, सकलश्रेयः प्रदात्री =bestowing on us all forms of welfare and bliss, विशिष्यताम् =may it be emotively experienced by all.

O parents ! The greatness of your yoga is measureless and worthy of worship. It is an embodiment of soul-joy. It is perfect and whole by itself. It is united and made powerful with Parasakti. It is brilliant with the essence of Saiva philosophy. Here the word 'para' implies the root-form of the subtle sphota. This eulogy called "Anandanandini" is replete with the greatness and quintessence of that soul-joy. As it is embraced all over by the all-powerful 'para', it is worthy of being perused by one and all. It bestows all spiritual fruits including oneness with the Divine Mother, the full-form of all kalas from ' a' to ' ksha.'

103. नन्दन्तौ स्वयमन्तरम्ब ! नितरामानन्दयन्तौ युवां
पारस्पर्यमिमं तु नन्दनमिह प्रोद्भाव्य यातौ शिवौ ।
स्वात्मानन्दरसैकनन्दनमिमं चिद्भानुना सांप्रतं
तन्वाथां सरहस्यविश्वशिवसच्चित्तत्त्वसुज्ञानिनम् ॥

अन्व :– अम्ब ! युवां अन्तः स्वयं नन्दन्तौ तथा पारस्पर्यं नितरां आनन्दयन्तौ, इह इमं तु नन्दनं प्रोद्भाव्य शिवौ (सतौ) यातौ सांप्रतं इमं चिद्भानुना स्वात्मानन्दरसैकनन्दनं सरहस्य

विश्वशिवसच्चित्तत्त्वसुज्ञानिनं तन्वाथाम् ।

नन्दिनी :– अम्ब ! शिवौ युवां =मम मातापितरौ विशालाक्षीशिवलिङ्गार्यौ युवां, स्वयं=अनितरापेक्षं, स्वस्मिन्नेवेत्यर्थः । नन्दन्तौ =स्वात्मानन्दमनुभवन्तौ, तथा, पारस्पर्यं =अन्योऽन्यं यथा, नितरां =अतिशयेन, अस्मदादीनां जन्मदानानुग्रहेच्छयेति यावत् । आनन्दयन्तौ= अन्योऽन्यानन्दमनुभावयन्तौ सच्चिदानन्दैकरसोन्मुखमैक्येनाकलयन्ताविति यावत् । दम्पत्योस्सात्त्विकयोगस्य तादृशत्वात् । इह अस्मिन् भूलोके, इमं तु=विशेषेण निश्चयेन वा एतं, " तु स्याद्भेदेऽवधारणे " इत्यमरः । सुविशिष्टसन्ततिप्रजनननिश्चयेनेत्यर्थः । नन्दनं =पुत्रं "आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते" इत्युक्त्या स्वात्मानन्दप्रतिफलितरूपेण अन्तिमपुत्र तया च युवाभ्यामप्यानन्ददायकमित्यर्थः । प्रोद्भाव्य=जनयित्वा, शिवौ =पार्वतीपरमेश्वरौ (द्वितीया विभक्तिः), यातौ=गतौ (शिवौ पार्वतीपरमेश्वरौ सतौ =तदभिन्नौ भवन्तौ गतौ=यातौ मर्त्यलोकादित्यप्यर्थः) तल्लीनावभूतामित्यर्थः । शिवैक्यं गताविति भावः । सांप्रतं=इदानीं मद्वृद्धदशायामित्यर्थः । तादृशौ युवां , इमं=एतं पुत्रं, चिद्भानुना=ज्ञानसूर्येण ज्ञानप्रकाशेन स्वात्मज्ञान प्राकशेनेत्यर्थः । स्वात्मानन्दरसैकनन्दनं–स्वयोः=युवयोः स्वस्य =मम च, स्वेषां= अस्माकं त्रयाणामिति यावत् । आत्मानन्दरसस्य =अस्मत्त्रयाणामात्मानन्दरसस्य, एकं=सुख्यं, एकीभूतं, नन्दनं=आनन्दयितारं (युवयोरानन्दग्रन्थित्वात्) दिव्योद्यानं च अनन्तसुमनोज्ञसुमकोमलरूपविलासस्थानं चे त्यर्थः । सरहस्यविश्वशिवसच्चित्तत्त्व– सुज्ञानिनं– सरहस्यं=रहस्येन सहितं निगूढं यत् विश्वस्य=सकलप्रपञ्चस्य शिवस्य=तत्कर्तुरीश्वरस्य च, सच्चित्तत्त्वं=ब्रह्मज्ञानानन्दात्मकतत्त्वमित्यर्थः। तस्य सुज्ञानिनं =सुष्ठु संपूर्णतया ज्ञातारं, तन्वाथां= मां प्रकाशयतमित्यर्थः । तदैव युष्मन्नन्दनत्वं सार्थकं भवतीति भावः ।

अत्र नन्दन्तौ आनन्दयन्तावित्यनेन तयोर्दाम्पत्ययोगः समुन्नतसात्त्विकयोग इति गम्यते । वर्णाश्रम धर्म संस्कृतेरयं प्रभावः यद्वैवाहिकं जीवनं स्वात्मनिग्रहप्रधानेन धर्मेण प्रारभ्यते । न तु केवलेन समुद्विग्नोच्छृंखलेन कामेन । धर्मबद्धेनैवार्थेन सत्त्वोन्नतं गार्हस्थ्यं समुचितं सन्नियतं सत्त्वोन्नततेजस्सन्ततिफलं च समनुभूयते । अत एव भारतीयं (प्राचीनं) गार्हस्थ्यं अस्खलितब्रह्मचर्यानुपदसंप्रवर्तनीयं सत् एकपत्नी ब्रह्मचर्यात्मनैव संभाव्यते। अत एव कविना सांप्रंत नवीनसंस्कृतिमनुसृत्य सुनियतवर्णाश्रमसंस्कृतेराराद्गत्या वृद्धस्य, स्वशैशवे स्वमातापित्रानन्ददायकस्यापि स्वस्य स्वात्मानन्दैकरसशिवसच्चित्त्वत्त्वसुज्ञानप्रेप्सा सुप्रकाशं सुनिवेदितेति सारांशः । अस्यैव पद्यान्तरितं रूपम् :–

**आनन्दयन्तावन्योन्यं नन्दन्तौ स्वयमात्मनोः । आनन्दनन्दनं मांहि प्रासूयेथां शिवौयुवाम् ॥**

**तनुतं मां विश्वतत्त्वविज्ञानानन्दनन्दनम् । यदेव भवदात्मैकसच्चिदानन्दनन्दनम् ॥**

"प्रथमं स्वात्मानन्देन मोदमानौ ततः अन्योन्यमानन्दयन्तौ युवां शिवौ मां" विश्वतत्त्वविज्ञानानन्दनन्दनं भवतोः आत्मैकसच्चिदानन्दनन्दनं कुरुतम् इति भावः ।

**Nandini:-** अम्ब =Mother !, युवां =you both (you, our parents), स्वयं =in yourself, नन्दन्तौ =experiencing soul–joy, पारस्पर्यं =mutually for each other, नितरां =very much, आनन्दयन्तौ =enjoying themselves (experiencing the other's joy as one's own), इह =on this earth, इमं तु नन्दनं प्रोद्भाव्य =giving birth to this your son (nandayatiti nandanah- one who gives happiness),शिवौ यातौ =you have merged yourself with the Divine Parents, साम्प्रतम् =now, in my old age, इमं =this your son, चिद्भानुना =with the sun of wisdom, स्वात्मानन्दरसैकनंदनं =make me happy, like the pleasing heavenly garden nandanam, with the eternal experience of soul -joy. सरहस्यविश्वशिवसच्चित्तत्त्वसुज्ञानिनम् तन्वाथाम् =make me well–versed in unravelling the mysteries of the universe and in elucidating with my own experience the Parasivatattwa.

Mother ! you both ( my parents) were by yourselves replete with soul-joy. Still you make one another happy mutually. These your individual joys merging into one pure joy have made me born to you for giving joy to yourselves. These joys then merged into one soul-joy, Sivykya. Now, in my old age, I am not in the know of Self-Realization methods.. Therefore Mother ! Bless me that the Sun of wisdom shine forth in me so that I be in the experiential state of soul-joy (Siva -joy) for ever.

In this poem, the words" nandantau anandayantau" indicate that the dampatyayoga of the parents is a serene and lofty yoga. [paragatasukhadibhavanaya bhavitantahkaranatwam sattwam – the mental ability with which one is able to experience the feeling of happiness etc. of others is what is called serenity –sattwam. Munificence is also serenity – 'tyageynaike amritatwamanasuh'. Immortality comes out of giving only. Giving mutual joy through their individual joys, the parents are performing sattwikayoga. This is the result of the culture of varnasramadharma. In this culture, we find the marital life to be endowed with control. Dampatyayoga does not fructify through unbridled lust. The state of a householder undertaken after studentship (brahmacharya) will always be one of one-wife brahmacharya. The Kama experienced through Artha bound by Dharma will lead one to Moksha only. Therefore that kamayoga of the house–holder is proper, well-

controlled and capable of producing offsprings, endowed with the light of serenity. The poet, influenced by the modern culture, has gone far away from the culture of varnasramadharma and has become old. Though he could give joy to his parents during his childhood, he is not able to experience a whit of that joy now in his old age. Therefore he prays his parents, who had merged themselves in Siva, to bestow on him the Ultimate Soul - joy which would enable him not to budge even an inch from the state of eternal wisdom.

**104. प्रतिशिशु यदुकैशोरं प्रतिदम्पति पार्वतीश्वरैश्वर्यम् ।**
**प्रतिमनुजमेतु नित्यं, वाक्परमेष्ठिस्ववैभवौज्ज्वल्यम् ॥**

**अन्व** :– प्रतिशिशु यदुकैशोरं नित्यं एतु । प्रतिदम्पति पार्वतीश्वरैश्वर्यं नित्यं एतु , प्रतिमनुजं वाक्परमेष्ठिस्ववैभवौज्ज्वल्यं नित्यं एतु ।

**नन्दिनी** :–प्रतिशिशु=शिशुं शिशुं, यदुकैशोरं =श्रीकृष्णशैशवं इह परतत्त्वाऽनन्द प्रकाशनं, नित्यं=निरन्तरं, एतु=प्राप्नोतु, एवमेव प्रतिदम्पति=दम्पती दम्पती, पार्वतीश्वरैश्वर्यं= पार्वतीपरमेश्वरयोरणिमाद्यष्टैश्वर्यं, नित्यमेतु इति प्राग्वत् । ततः प्रतिमनुजं =मनुजं मनुजं, वाक्परमेष्ठिस्ववैभवौज्ज्वल्यं=सरस्वतीब्रह्मणोः स्वयोः, शब्दस्याकाशगुणत्वात् सर्वव्यापनशीलं, दिव्यज्योतिरिव अणुमहतोः बहिरन्तःप्रकाशकं, वाग्रूपं महः नित्यं एतु प्राप्नोतु । अत्र कविः शैशवे वैष्णवं , यौवने शैवं, सामान्यतः आमरणं मनुजे ब्राह्मं च तेजः नित्यमाविशतु इति प्रार्थयति ।

**Nandini:-** प्रतिशिशु =Every child, यदुकैशोरं =the early childhood of Sri Krishna (which expresses the materialistic and spiritualistic joys equally) नित्यं =always, एतु =let every child be blessed with the joys and ecstasies of the early childhood of SriKrishna !,प्रतिदम्पति पार्वतीश्वरैश्वर्यं एतु =let every parentpair be blessed with the spiritual sovereignty of Parvati and Parameswara !, प्रतिमनुजं वाक्परमेष्ठिस्ववैभवौज्ज्वल्यम् एतु =let every human being be blessed with the all-pervading brilliant light of Saraswati and Brahma !

Mother ! The first intelligent and thinking being in the creation is the human being. The human being is first a child. Then he pairs himself on reaching youth. May every human being be blessed with the bright light of word, the form of Vani and Hiranyagarbha. In accordance with the earnest prayer 'Tamaso

majyothirgamaya', let every human being be able to dispel the darkness of ignorance that covers him, and be led to the light of the word (sabdabrahman) ! May the childhood of all children be surcharged with the ecstasies of the early childhood of Sri Krishna, which is a mine of physical and spiritual wisdom. May the other stages too of the human life– youth and old age – be blessed with the ability to keep the eight prowesses under his control and be blessed with the all-sovereign feeling ! The poet thus wishes for all human beings the sovereign affluence of Brahma, Vishnu and Siva. The life charged with the prowess of the Trinity is indeed worthy of being called life.

105. मामालिङ्ग्य रसोपगूढमखिलं सञ्चुम्ब्य मद्वक्त्रकं
यो ह्यानन्दरसोऽन्वभावि सुचिरं मय्यम्ब ! पित्रा समम् ।
तस्याऽहं खलु मूढ एष नितरां कीदृक् स आसीदिति
स्वात्मानन्दरसैकपूर्णमखिलं तं देहि नित्यं स्वकम् ।।

अन्व :– अम्ब ! मां रसोपगूढं आलिङ्ग्य, अखिलं मद्वक्त्रकं सञ्चुम्ब्य, मयि यः आनन्दरसः पित्रा समं सुचिरं हि त्वया अन्वभावि तस्य एषः अहं कीदृक् सः आसीत् इति मूढः खलु । तस्मात्कारणात् स्वकं स्वात्मानन्दरसैकपूर्णं अखिलं तं नित्यं देहि ।

नन्दिनी :– अम्ब! मां रसोपगूढं =वात्सल्यानुरागरसोद्वेगगाढं, अलिङ्ग्य=सर्वाङ्गमाश्लिष्य, मद्वक्त्रकं = मदीयं शैशवसुन्दरं मुखं, अखिलं =कंचिदप्यंशमविहाय, सञ्चुम्ब्य=सम्यक् पुनः पुनः परिचुम्ब्य , मयि यः आनन्दरसः =ब्रह्मानन्दरसः, पित्रा समं= पित्रासह, सुचिरं हि=सुदीर्घकालं यावत् त्वया, अन्वभावि=अनुभूतः । तस्य=तादृशानन्दरसस्य, एषः= वयसा गरीयान् वृद्धः, अहं, सः=तादृशब्रह्मानन्दरसः, कीदृक्=किंविधः किंरूपश्च, आसीत् =अभूत् , इति =इत्यस्मिन्विषये, मूढः खलु=अज्ञः खलु । तस्मात् कारणात्, स्वकं=स्वानुभूतत्वात् स्वकीयं, अखिलं=अन्यूनं समस्तं पूर्णं , तं=तद्ब्रह्मानन्दरसं, नित्यं=निरन्तरं, देहि=यच्छ, अनुगृहाणेत्यर्थः। शिशौ मयि पित्रा साकं मदालिङ्गने मच्चुम्बने च अनुभूतः युष्मदानन्दः मयाप्यनुभूतः स्यात् । परन्तु सः=भवद्भ्यामनुभूतः आनन्दः मया तु स्मर्तुमपि न शक्यः। इदानीं केवलं भावनासम्पादितः स आनन्दः याथार्थ्येन अनुभवसिद्धो भवतु– इति प्रार्थ्यते । स एव स्वात्मानन्द इति भावः । कामोद्वेगाद्यकलुषितत्वात् स्त्रीसुखानन्दे आलिङ्गनचुम्बनादीनां समत्वेऽपि तत्र रजस्तमोभ्या मुद्रिक्तता, परिच्छिन्नता च भवतः । अत्र केवलं सात्त्विकतया अपरिच्छिन्नता इति विशेषः ।

**Nandini:-**अम्ब =Mother !. मां =me, your child. रसोपगूढं आलिंग्य

=clasping me fast with overflowing filial affection मद्वक्त्रकं =my little face, अखिलं संचुम्ब्य=kissing it all through, मयि =in me, यः आनन्दरसः=that soul-joy, पित्रा समं = along with my father, सुचिरं =for a long time, तया =with you, my mother,अन्वभावि =which has been experienced तस्य =for that joy, एषः अहं =This I, who have gone now past that age, सः=that soul- joy, कीदृक् आसीत् इति = how is it मूढः खलु =I am ignorant of it, (तस्मात् =because of it) स्वकं अखिलं तं =that which was experienced by you, therefore yours; that pure soul-joy, नित्यं देहि =Bestow that joy on me always.

Mother ! In my childhood, you, along with my father, clasped me fast and caressed my little face all through many a time. The joy felt by you both, is certainly unconditional, past desire and can be articulated by you alone. I too might have experienced then that joy. But I do not now know what is it to feel that joy. It is not only indefinable like soul - joy but also beyond the scope of my remembrance. I pray you to bless me with the experience of that pure ever -new joy in this my old age too.

106. **सर्वाभीष्टपरम्परापरिणमज्जन्मान्तरभ्रामितं**
**संसारभ्रमिचक्रमद्य भ्रमयद्बुद्धिं च मेऽघातयत् ।**
**तस्मान्मोक्षमिहाधिगन्तुमचिरात्साक्षाच्छिवैक्यात्मकं**
**मातस्ते जगदेकमातृललितैकैश्वर्यमभ्यर्थये ॥**

**अन्व** :– मात :! सर्वाभीष्ट परम्परापरिणमज्जन्मान्तरभ्रामितं, संसारभ्रमिचक्रं अद्य मां भ्रमयत्, मे बुद्धिं च अघातयत् । तस्मात् इह, अचिरात् मोक्षमधिगन्तुं साक्षात् शिवैक्यात्मकं ते जगदेकमातृललितैकैश्वर्यं अभ्यर्थये ।

**नन्दिनी** :– मातः! सर्वाभीष्टपरम्परापरिणमज्जन्मान्तरभ्रामितं =सर्वेषां अभीष्टानां परम्परया =दीर्घदीर्घं अस्मात्परं, तस्मात्परं ततोऽपि परमित्येवंविधया वाञ्छितानां श्रेण्या, परिणमद्भिः =परिणामानि प्राप्नुवद्भिः, जन्मान्तरैः=अनेकपूर्वजन्मभिः, भ्रामितं=चक्रभ्रमेण भ्रामितं, संसारभ्रमिचक्रं =संसाररूपं निरन्तरपुत्रपौत्राद्युत्पत्तिरूपलम्पटात्मकं, भ्रमिचक्रं= नित्यमविरतं भ्रममाणं चक्रं, भ्रमयत् =भ्रमणं कारयत् सत्, मे=मम, बुद्धिं सुज्ञानसाधनं सुज्ञानं च, अघातयत् =व्यनाशयत् नाशमकरोदित्यर्थः । तस्मात् =तत्कारणात्, इह =अस्मिन् लोके, मोक्षं =संसारनिवृत्तिरूपं, अधिगन्तुं =प्राप्तुं, अचिरात्=अनुपदमेव, साक्षात् =प्रत्यक्षं,

शिवैक्यात्मकं = सदाशिवैक्यरूपं (शिवलिङ्गार्यैक्यरूपं) ते=मम मातुः तव, जगदेकमातृललितैकैश्वर्यं=जगदेकमातृभूतललितेशान्या सह, एकं=एकभावमापन्न ऐश्वर्यं=सर्वेश्वरवैभवं अथवा जगदेकमातुः ललितैकैश्वर्यं =दिव्यसुन्दरप्रधानं सर्वैश्वर्यं, अभ्यर्थये=प्रार्थये । सामान्यतः, ऐश्वर्यस्य राजसप्राभवरूपत्वात् आनन्दैकहेतुदिव्यसौन्दर्यप्राभवं प्रार्थ्यते इति भावः ।

**Nandini:**-मातः= Mother ! सर्वाभीष्टपरंपरापरिणमज्जन्मान्तरभ्रामितं =being made to revolve in the endless rounds of umpteen births and having been beset in every birth with an endless chain of desires, संसारभ्रमिचक्रं=the ever-revolving round of profligate and dissolute mundane world, भ्रमयत् मे बुद्धिं अघातयत् =it has whirled my intellect and destroyed it, तस्मात् =due to this, इह =in this world, मोक्षं अधिगन्तुं =to attain liberation अचिरात् =immediately साक्षात् =directly, शिवैक्यात्मकं ते =you, my mother, always, immersed in Siva-consciousness, जगदेकमातृललितैकैश्वर्यं अभ्यर्थये =I pray for the divine joy- riches of the Divine Mother.

Mother ! I am incarnating time and again because of my endless desires. "Punarapijananam punarapi maranam punarapi jananijathare sayanam"–this birth cycle is endlessly following me monotonically. As there is no end to the line of desires, there is no end to the line of births and deaths too. This endless revolving cycle has destroyed my intellect, which is useful as an instrument in attaining liberation.

Thus I have gone very much away from the thought of liberation. To gain liberation, one has to have a direct experience of oneness with Siva. This oneness is the main sway of the divine beauty of the Divine Mother. As the worldly sovereignty is sullied with rajas, I pray for the sovereignty charged with the beauteous serenity of the Divine Mother. Bless me, mother !, with those covetable riches !

107. जातश्शिशुर्जननि ! मातरमार्द्रभावां
त्यागैकमूर्तिमतुलां तनुते स्वपुष्ट्यै ।
स्वार्थस्स एव ! जननानुगतो मयीति
न त्याज्य एष सुतरां भवदीयबुद्ध्या ॥

अन्व :– जननि ! जातः शिशुः स्वपुष्ट्यै मातरं आर्द्रभावां अतुलां त्यागैकमूर्तिं तनुते अम्ब! स : स्वार्थः एव मयि जननानुगतः इति हेतोः भवदीयबुद्ध्या एषः अहं सुतरां न त्याज्यः इति प्रार्थये ।

नन्दिनी :– जननि=हे मातः , जातः=सद्यः समुत्पन्नः, शिशुः=स्तनंधयः, स्वपुष्ट्यै=स्वस्य सार्वविषयिकमनोवाक्कायबलवृद्ध्यै, मातरं =स्वमातरं (जगन्मातरं च ), आर्द्रभावां– अर्द्रः=दयामृदुः, भावः=मनोवृत्तिः आत्मा वा यस्याः तां , ततः अतुलां=असदृशां, त्यागैकमूर्तिं– त्यागः=स्वार्थविसर्जनपूर्वकपरार्थयोजनं, स एव एका=मुख्या प्रधाना, मूर्तिः=सूक्ष्मा स्थूला च आकृतिः यस्याः तां , तनुते= प्रकटयति करोति च , जननि! = हे जननि ! सःस्वार्थः एव = तादृशउपर्युक्तः स्वार्थः एव =स्ववृद्ध्यै त्वत्स्वार्थाहरणरूपः, मयि, जननानुगतः =त्वत्तः मज्जननमनुसृत्यैवागतः, संक्रान्तइत्यर्थः । इति=इत्येतत्कारणात् , एषः=इदानीं वर्तमानः अहमपि, भवदीयबुद्ध्या=त्वत्सम्बद्ध इति भावनया (भवदीय ऋद्ध्या इति पाठे =त्वद्दिव्यसंपदा, पुत्रत्वात् मयि संक्रामयितव्या) सुतारां = किञ्चिन्मात्रमपि, न त्याज्यः= न वर्जनीयः त्वत्सायुज्येनैवाऽहं वर्तनीयः इति भावः ॥

**Nandini:-** जातः शिशुः=the nascent child, स्वपुष्ट्यै =for its all- round strength, मातरं = mother (Divine Mother), आर्द्रभावां =one whose tender heart is drenched with the milk of mercy, अतुलां =unparalleled, त्यागैकमूर्त्तिं =the embodiment of sacrifice, तनुते =it shines forth, जननि=O my Mother! स्वार्थः सः एव= that Selfsame selfishness of the child, मयि जननानुगतः इति =it has come to me from the day of my birth, एषः= this myself, भवदीयबुद्ध्या =with the feeling that I am yours, सुतरां न त्याज्यः =please do not forsake me at all (please keep me in your presence always).

Women who are, prior to giving birth to a child, selfish and hard-hearted, forsake their selfshness and become soft-hearted soon after they give birth to a child. Therefore, this welcome change is due to the child only. Giving milk to the child, attending to the needs of the child day and night, foregoing all her pleasures and happinesses etc. – are some indicators of this welcome attribute. That the mother has to attend on him and him alone is the selfishness of all children. This selfishness is with me also from the day of my birth. Now too, I have that selfish desire that you be with me all through and protect me. Therefore, my mother ! I pray you to protect me in and out with the feeling that I am your child. The

milk that comes out of the breasts soon after the birth is interpretable in a way as a selfishness of the child. In the same way all the unconditional love that the mother pours on the child is another form of the selfishness of the child. Without this, the child cannot live at all.

108. अविरतविरतिस्तैलं सुवर्तिका निश्चलैव मे भक्तिः ।
अमलिनहृदयं पात्रं, स्वं ज्ञानं जननि ! दीपयैतस्मिन् ॥

अन्व :– जननि ! अविरतविरतिः, तैलं मे सुनिश्चला भक्तिः एव सुवर्तिका, अमलिन हृदयं पात्रं; एतस्मिन् स्वं ज्ञानं दीपय ।

नन्दिनी :– जननि ! अविरतविरतिः=अविच्छिन्नविरागः; तैलं=तिलेषु भवः स्निग्धद्रवः ज्वालाज्वलनसाधनं, मे=मम, सुनिश्चला=सुस्थिरैकाग्रा, भक्तिः एव= आराध्यविषयकरागविशेषः अराध्यविषयकासक्तिः आराध्यत्वदृढज्ञानं, सुवर्तिका=सुष्ठुकार्पासेन दीर्घं वर्तिता दीपज्वालासाधनिका, अमलिनहृदयं= निर्मलस्वान्तं, पात्रं=दीपपात्रं, एतस्मिन् =मम हृदयपात्रे, स्वं ज्ञानं= स्वाभिन्नं ज्ञानं आत्मज्ञानं ज्योतीरूपं, दीपय=प्रकाशय स्वात्मानमेव प्रकाशयेति भावः ।

**Nandini:-** जननि =Mother !, अविरतविरतिः तैलं =renouncing everything other than thee is the oil capable of burning the wick of the lamp, मे निश्चला भक्तिः एव सुवर्त्तिका =my firm love is itself the lamp-wick– that which is instrumental in producing the light of the lamp, मे अमलिनहृदयं पात्रं =my spotless inner self is itself the oil-pot for planting the wick, जननि =mother ! एतस्मिन् =in the lamp- oil-pot of my heart, स्वं ज्ञानं दीपय =kindly light in me the light of soul-wisdom.

Mother ! My spotless heart is the oil-pot supporting and sustaining the lamp-wick ; renouncing everthing other than you is the oil; my unshakable love for you is the lamp-wick. Thus all the paraphernalia required for the lighting of the lamp are readily available in me. One meaning of 'swam jnanam' is "light the lamp of thy swarupa in me "; another one is "light the lamp of soul-wisdom in me". In essence, it means; "light the lamp of the matritattwajnana in me".

109. शिवानन्दवल्ली ममानन्दवल्ली
सुतानन्दवल्ली समानन्दवल्ली।
सदानन्दवल्ली चिदानन्दवल्ली
महानन्दनन्दन्यवल्ली प्रभूयाः ॥

अन्व :- शिवानन्दवल्ली ! त्वं मम आनन्दवल्ली सुतानन्दवल्ली, समानन्दवल्ली, सदानन्दवल्ली, चिदानन्दवल्ली, महानन्दनन्दन्यवल्ली प्रभूयाः ।

नन्दिनी :–त्वं शिवानन्दवल्ली–शिवस्य=शिवलिङ्गार्यस्य सदाशिवस्य च यः आनन्दः स एव वल्ली=लतारूपं नवनवपल्लवपुष्पसुगन्धमरन्दमनोज्ञं धारयन्ती मातः त्वं, मम =अस्य मम, आनन्दवल्ली=वात्सल्यानन्दरूपेण वलयित्री (वल सं वरणे धातुः) लता प्रभूयाः =प्रकर्षेण भव । न केवलं ममैकस्य परं तु सुतानन्दवल्ली=तव सुतानां–स्त्रीपुंसुतानां सर्वेषां, आनन्दवल्ली= वात्सल्यानन्दरूपेण वलयित्रीति पूर्ववत् । अपि च समानन्दवल्ली-समेषां=सर्वेषां स्वेषां परेषां अन्येषां च , आनन्दवल्लीति पूर्ववत् । ततः सदानन्दवल्ली =सद्रूपेण आत्मानन्देन वलयित्री , चिदानन्दवल्ली =ज्ञानानन्देन वलयित्री, अन्ततः महानन्दनन्दन्यवल्ली = नन्दयतीति नन्दनः, तत्र साधुः नन्दन्यं आनन्ददायकं तत्वमित्यर्थः (तत्र साधुरिति यत्) । महानन्दस्य तैत्तिरीयानन्दवल्ल्युक्तानन्दसाकल्यस्य नन्दन्यं =परमानन्ददायकमित्यर्थः (दिव्यनन्दनवनजन्या–नन्ददायकमिति यथायोग्यमूह्यम् ) तेन वलयित्रीति पूर्ववत् । तादृशवल्ली प्रभूयाः=प्रकर्षेण भव। सुसमर्था भव इत्यर्थः ।

**Nandini:-** शिवानन्दवल्ली त्वं =O joy-creeper of Lord Siva (Sivalingarya) ('valayitriti valli' One which entwines round a support completely), त्वं =you, अस्य =this , your son's, आनन्दवल्ली =creeper called mother's-joy, [From mother's view- point, it is a creeper of tender affection], सुतानन्दवल्ली =you are the joy-creeper for all your offsprings, समानन्दवल्ली =you are the joy-creeper for all the world, सदानन्दवल्ली =you are the joy-creeper of the Unqualified Entity, चिदानन्दवल्ली= you are the joy-creeper of soul-wisdom, महानन्द =the magnitude of ecstasy recounted in Thyttireeya Anandavalli नन्दन्य =you envelop us with the Ultimate Soul-joy.

Mother ! you are the joy-creeper entwining round Lord Siva. May I , your son, be made into an embodiment of joy, being yourself Joy Incarnate. Not only me. May all your sons and daughters be made into embodiments of joy. Not only them. May all your world-progeny be made into a Joy-Incarnate. You are the Ultimate Soul-joy excelling even the greatest joy recounted in Thyttireeya Upanishad.

110. तदानन्दवल्ल्यास्सुवर्णैस्स्वपुष्पै –

रनन्यैकरस्यात्मदिव्यैः फलैस्त्वम् ।

विधेहीममानन्दनन्दन्यमम्ब !

स्वयं विश्वमाभासयात्मप्रभासम् ॥

अन्वयः :- तदानन्दवल्ल्याः सुवर्णैः स्वपुष्पैः अनन्यैकरस्यात्मदिव्यैः फलैश्च इमं मामानन्दनन्दन्यं विधेहि ततः स्वयं विश्वं आत्मप्रभासं आभासय ।

नन्दिनी :- अम्ब ! तदानन्दवल्ल्याः=पूर्ववर्णितायाः महानन्दलतायाः ब्रह्मानन्दलतायाः, सुवर्णैः = सुश्वेतपीतादिशोभनवर्णैः शोभनाक्षरैश्च कनकमयैश्च, स्वपुष्पैः=स्वप्रसूनैः, अनन्यैकरस्यात्मदिव्यैः फलैः-अनितरसादृश्येन, एकात्मतया रस्यात्मना च बहिरन्तरपि रसरूपैः, दिव्यैः= महादेवमयैः, फलैश्च, इमं मां =सर्वविधया हीनं मां, आनन्दनन्दन्यं=आनन्दस्यापि नन्दनः= आनन्दयिता=आनन्दनन्दनः तत्र साधुं सुसमर्थं आनन्दनन्दन्यं (तत्रसाधुरिति यत्) विधेहि=विरचय । ततः स्वयं=इतरानपेक्षं त्वमेव, विश्वं =जगत् , आत्मप्रभासं- आत्मनः=विश्वात्मनः स्वस्यापि, प्रकृष्टा भाः यस्य तत् तादृशं, आभासय= आसमन्तात् प्रकाशय। आत्मप्रकाशत्वात् विश्वस्वरूपं आभासय =असत्यरूपेण प्रकाशय । विश्वस्य स्वरूपतया असत्यत्वं प्रकाश्य , परमार्थतया आत्मस्वरूपं प्रकाशयेति भावः ।

**Nandini:-** अम्ब =Mother !, तदानन्दवल्ल्याः=of the creeper of soul-joy described in the previous poem, सुवर्णै :=golden–lettered, variegated, सुपुष्पैः =with fragrant flowers, अनन्य =unparalleled, एकरस्यात्म =being of the form of the same 'rasa' externally and internally too दिव्यैः फलैः= with divine fruits, इमं = this poor creature, me, आनन्दनन्दन्यं विधेहि= make me capable of attaining that ultimate joy, स्वयं = yourself, not being influenced by others, विश्वं आत्मप्रभासं आभासय = make the world which is Thy Spirit's reflection, shine forth in all its full glory.

Mother ! your joy-creeper-form has golden and luminous flowers, which are also the kalas from अ to क्ष. That creeper has fruits too, which are endowed with juice nonpareil. They are juicy throughout , without any difference between the cover and the kernel. Therefore they are divine and of the form of Lord Siva. Here I, in my present plight, am not able to taste these fruits of joy. Bless me, my mother ! , with that joy-juice ! Bless all the world with that joy-juice.

"Viswam atmaprabhasam Abhasaya"reflects the meaning in Upanishad-mantra "Na tatra suryo bhati......"

111. शिवानन्दे लीना त्वमसि शिवसायुज्यसुषमा
यतस्संभूतेयं प्रणुतिरखिलालोकललिता ।
पुनस्तस्यामेवार्पितसकलरस्यात्मसुषमा
समालीना भूयाज्जननि ! जनिदोषप्रशमनी ॥

**अन्वयः** :– जननि त्वं शिवानन्दे लीना शिवसायुज्यसुषमा असि । यतः अखिलालोकललिता इयं प्रणुतिः संभूता पुनः तस्यां एव अर्पितसकलरस्यात्मसुषमा जनिदोषप्रशमनी समालीना भूयात् ।

**नन्दिनी** :– जननि ! त्वं, शिवानन्दे–शिवस्य=शिवलिङ्गार्यस्य तदभिन्नसदाशिवात्मकस्य, आनन्दे, लीना=सर्वात्मना संविष्टा, शिवसायुज्यसुषमा– शिवसायुज्यस्य= उपास्यशिवात्मतापत्तिरूपस्य, सुषमा=मनोज्ञा शोभा, असि=भवसि। (सदोपास्यसहवृत्तिरूपस्य वा शोभाअसि) यतः=यच्छिवसायुज्यशोभातः, अखिलालोकललिता=निखिलैरनूनैस्समस्तैः आलोकैः= ज्योतिर्भिः, ललिता=सुकुमारसुन्दरा, अखिला=समस्ता सर्वात्मिकेत्यर्थः । लोकस्य=सर्वलोकस्य, ललिता=सुकुमारदिव्यसुन्दरा च इत्यर्थः । इयं प्रणुतिः=एषा मातृस्तुतिः, संभूता =जनिता । पुनः, तस्यां एव=तच्छिवसायुज्यसुषामायां एव, अर्पितसकलरस्यात्मसुंषमा– अर्पिता=समर्पिता, कलाभिः= षोडशकलाभिः सहिता, रस्यात्मनः=सदाशिवानन्दरसात्मनः, सुषमा=शोभा यस्यां सा, तथासतीत्यर्थः । जनिदोषप्रशमनी =जननमरणादिसंसारदोषपरिहर्त्री सती, समालीना=सम्यक् संपूर्णतया सदाशिवानन्दसायुज्यसुषमायामेव, लीना=सर्वात्मना प्रतिपदवाक्यं प्रत्यक्षरं तदात्मैव, भूयात्=भवतु, त्वत्संभूतास्तुतिवाक् त्वय्येव लीयतामिति भावः ।

**Nandini:-** जननि =Mother !, शिवानन्दे लीना =you are engrossed with all your heart and soul in the joy of Lord Siva (Sivalingarya), शिवसायुज्यसुषमा असि =you have the beautiful sheen obtained through your oneness with Lord Siva (you have attained worshippability through your oneness with Lord Siva), यतः=from which beauty, अखिल =all,आलोक =(divine) lights, ललिता =beautiful and tender, (अखिला लोकललिता =your omni-form is divinely beautiful in the eyes of all) इयं प्रणुतिः=this eulogy, संभूता =is born, पुनः=again, तस्यां एव =in her only, i.e. in that beautiful sheen of Sivasayujya. अर्पितसकलरस्यात्मसुषमा =that beauty in which all the kalas and the Ultimate Soul-joy are present, जनिदोषाप्रशमनी=that which is capable of destroying the sins

that cause reiterated births, समालीना भूयात् =may she engross herself in every letter, word and sentence of this work.

Mother ! you are always engrossed in Siva-joy and you always manifest the beauty and brightness of Siva-Sayujya (oneness with Siva). This eulogy of Mother of mine too is born out of that bright beauty only. May it unveil its joy-core (rasyatwa) to that bright joyous beauty. May it be capable of destroying the sins that cause the unending cycle of births and deaths. May every letter, word and sentence of this work shine forth thy beauty.

**112. अहं वां योगेन स्वयमिह सता तावकचिता**
**घनानन्तानन्दोऽजनिषि तव शिक्षाविधिवशात् ।**
**श्रुतित्वङ्नेत्रादिस्वविषयविकारैः परिमिता**
**चिदेषा मे भूयादपरिमितसच्चिच्छिवमयी ॥**

अन्वयः – जननि ! वां योगेन, सता तावकचिता, अहं स्वयं, घनानन्तानन्दः अजनिषि श्रुतित्वङ्नेत्रादिस्वविषयविकारैः परिमिता एषा मे चित् , तवैव शिक्षाविधिवशात् अपरिमितसच्चिच्छिवमयी भूयात् ।

नन्दिनी :– जननि ! वां =दम्पत्योः आदिदम्पत्यभिन्नयोः, योगेन=दिव्यानन्दयोगेन, सता=पित्रात्मकशिवरूपेण सता, तावकचिता=मात्रात्मिकया जगन्मात्रात्मिकया चिता, अहं=एषोऽहं, स्वयं=स्वतः, घनानन्तानन्दः – घनः=सान्द्रः घनीभूतः, अनन्तानन्दः= अन्तर्गतानन्तानन्दवान् पञ्चप्राणज्ञानकर्मेन्द्रियशरीरात्मकः, अजनिषि=प्रादुरभूवम्, ततः इत्य ध्याहारः । तत्पश्चात्, तव, शिक्षाविधिवशात्=प्रापञ्चिकविषयावगतिशिक्षणप्रकारवशात् , श्रुतित्वङ्नेत्रादिस्वविषयविकारैः =श्रुति – त्वक् – नेत्रादीनां पञ्चज्ञानकर्मेन्द्रियाणां, स्वविषयाः –शब्दस्पर्शरूपरसगन्धादयः सर्वे प्रापञ्चिकविषयाः, तेषां विकारैः =तदाकाराकारितज्ञानरूपैः परिमिता=परिच्छिन्ना, एषा मे =मम, चित् =संवित्, अपरिमितसच्चिच्छि वमयी= अपरिच्छिन्नानन्तसत्यज्ञानानन्दमयी (स्वरूपा) भूयात् =भवतु ।

अत्रायं विशेषः । जन्मतः शिशोः चिच्छक्तिरपरिच्छन्नैव । क्रमेण सा चक्षुरादीन्द्रियद्वारा प्रसरन्ती तत्तद्विषयाकाराकारा परिच्छिन्ना भवति , यथा च तटाकोदकं जलनिर्गमद्वारा क्षेत्रेषु प्रसृतं तत्तत्क्षेत्राकाराकारितं परिच्छिन्नं भवति । अत एव कविनोक्तं "अहं घनानन्तानन्दः अजनिषि" इति । ततः लौकिकविषयप्रसक्तस्सः (शिशुः )परिच्छिन्नः अभवत् । तस्मात्कारणात् कविः "तदेषा मे चित् अपरिमितसच्चिच्छिवमयी भूयादि" त्याशास्ते ।

**Nandini:-** जननि =Mother! वां योगेन =through your yoga [yoga

of both the parents; of the Universal Parents], सता =of the fatherly serenity (sattattwa), तावकचिता =of the motherly wisdom (chittattwa), अहं =I, स्वयं =by myself, घनानन्तानन्दः=one who has infinite wisdom and joy, अजनिषि=I am born,तव शिक्षाविधि वशात् =being blessed with your ingenious way of teaching about all objects of creation, श्रुति त्वक् नेत्रादि स्वविषय विकारैः परिमिता =it has been limited and made discontinuous with the modifications produced by the organs of hearing, touch, perception etc., एषा मे चित् =this my intellect or consciousness, अपरिमित सच्चिच्छिवमयी भूयात् =may it become unlimited continuum of Sivatattwa!

Mother ! you are the Wisdom-incarnate. Your husband, Lord Siva (Sivalingarya) is the Unqualified Entity. Your union is a divine union of joy. Out of this divine union, I am born, i.e. I am the frozen form of that unified joy. That soul-joy that would be born of me is also indefinable and infinite. It has assumed gradually the elementary organic body-form. With the ingenious teaching of my mother, I have learnt that such and such is milk; such-and-such is water, tree, hillock etc. Thus it has become limited to some forms. May this limited knowledge expand into unlimited wisdom through your unconditional Grace !

By birth ,the Existence -Wisdom-Bliss form of the child is without any limits and borders. But it becomes cribbed and cabined because of its projections into the outside world through its organs. The waters in the streams and lakes assume the shapes of the narrow canals and also of the fields into which they flow. In the same way, the primary form in which the child is born is the infinite Existence -Wisdom -Bliss form. But having been vitiated with the contact of the worldly objects, it has become cribbed and cabined, and hence devoid of all vitality. The poet here prays the Divine Mother to grant him again that unlimited, Infinite Sat-Chit-Ananda (Existence -Wisdom-Bliss) form.

113. त्वदाविर्भूतेयं ललिततनुवाग्दीपकलिका
समर्था सर्वात्मश्रियमतनुमाद्यां जननि ! मे ।
समाविष्कुर्वन्ती भजतु शिवशब्दार्थयुगली-
महोमूलं ज्योतिर्जनकमपि विश्वस्य महतः ।।

अन्वयः :– जननि ! त्वदाविर्भूता इयं मे तनुवाग्दीपकलिका समर्था, आद्यां अतनुं सर्वात्मश्रियं समाविष्कुर्वन्ती शिवशब्दार्थयुगलीमहोमूलं महतः विश्वस्य जनकमपि ज्योतिः भजतु ।

नन्दिनी :– जननि ! त्वदाविर्भूता=त्वत्तः मूलाधारस्थित "परा" शब्दरूपायाः, आविर्भूता=प्रकाशं गता, पश्यन्ती–मध्यमा–वैखरी रूपेण क्रमप्रकाशिता, इयं= एषा आनन्दनन्दिनी स्तुतिरूपा, मे=तव सुतस्य मम, ललिततनुवाग्दीपकलिका –ललिता=मनोज्ञा, तन्वी=अल्पा सूक्ष्मा भवत्सेवया भवत्करुणया च विस्तृतिं गमिष्यमाणा (तनुतेःसूक्ष्मविस्तारार्थकत्वात्), वाक् एव =वाणी एव, दीपकलिका=कोरकसदृशी दीपिका, समर्था=सर्वकार्येषु सर्वविधया निर्वहणे सुशक्तनिपुणा अन्वययोग्यार्थवती च सती (समर्थस्त्रिषु शक्तिष्ठे सम्बन्धार्थे हितेऽपि च. अमरः), आद्यां=सर्वस्यादिभूतां, अतनुं =महतीं, निराकारनिरञ्जनां, सर्वात्मश्रियं=सर्वात्मनः सदाशिवस्य, श्रियं=सर्वैश्वर्यशोभां,समाविष्कुर्वन्ती=सम्यगासमन्तात्प्रकाशयन्ती । शिवशब्दार्थयुगलीमहोमूलं =शिव इति शब्दस्य तदर्थस्य च, युगल्याः=द्वन्द्वस्य वागर्थरूपस्य अविनाभावेन संपृक्तस्य, महसः=शिवशक्त्यात्मकतेजःप्रभावस्य, मूलं =आदिभूतं सदाशिवतत्त्वं; महतः विश्वस्य =अनन्तविशालस्य जगतः, जनकं अपि=प्रादुर्भावकं च (अत्र अपि स्समुच्चये) ज्योतिः=सर्वज्योतिषां मूलं ज्योतिः प्रकाशरूपं ,भजतु =प्राप्नोतु, मातः जगन्मातः! त्वादाविर्भूता परा दीपकलिका तन्मूलमहाज्योतीरूपां त्वामेव सर्वात्मना भजतु इत्यर्थः ।

**Nandini:-** जननि =Mother!, त्वदाविर्भूता =Born from the Para-form and expressed gradually in the form of Pasyanti, Madhyama and then Vykhari. इयं = this eulogy named Anandanandini, मे =of mine (i.e. of your son), ललिततनुवाग्दीपकलिका = the tiny and pretty flame-like word-bud, समर्था =capable of performing all things with dexterity, आद्यां =primordial, causal form of all, अतनुं =great and formless, सर्वात्मश्रियं समाविष्कुर्वन्ती =clearly manifesting the all-round riches of the Omnipotent Sadasiva. शिवशब्दार्थयुगलीमहोमूलं =[Siva is sabda the word, the form of Umameheswara is artha the meaning] the root of the brilliance of this pair of word and its meaning, महतः विश्वस्य =of the infinite and vast universe , जनकं अपि च =the father and creator of it,ज्योतिः भजतु =may this light enlighten this work of "Matrstuthi".

Mother ! you are the light of Primordial word (Para) in the Muladhara. This light-bud of Matrstuthi has emanated from that Light –i.e. it has passed through the secondary (Pasyanti) and tertiary (Madhyama) states and finally attained the quaternary state

(Vykhari). Mother ! you are the infinite Primordial Root. You are the power-station of the Overlord . Let this tiny light of my work (Matrstuthi) be able to manifest in full thy effulgent form. i.e. this tiny light has come from you, the Great Light. Let this tiny light merge itself into that great light which is Thyself.

**114. मनोवाक्कायानामिदमखिलमात्तं जननि ! मे**
**युवाभ्यामात्मीयं परमिहतु वागेव हि परा,**
**सदैवैषा पूर्णा सपदि युवयोरर्पितवती**
**पदेषु स्वान्तेषु प्रकटयतु वां नः परतमा ॥**

**अन्वयः** :– जननि ! मनोवाक्कायानां इदं आत्तं मे अखिलं युवाभ्यां आत्मीयं एव । परं इह तु वागेव परा हि। एषा युवयोरर्पितवती सपदि पूर्णा परतमा सती नः पदेषु स्वान्तेषु सदा वां प्रकटयतु ।

**नन्दिनी** :– जननि ! मनोवाक्कायानां= मनसः वाचः कायस्य च सम्बन्धि विकारं, इदं =इन्द्रियविशिष्टशरीरवदविद्योपहितचैतन्यजीवात्मकं , युवाभ्यां= पितृभ्यां मातापितृतः इत्यर्थः। आत्तं=प्राप्तं, मे, अखिलं यत्=यत् समस्तं शरीरं अस्ति तत्, आत्मीयं एव=युवयोरात्मसम्बन्धि एव । आत्मा वै पुत्रनामासि इति वैदिकोक्तेः । इहतु=अत्र तावत् त्वत्स्तुतिरचनायामित्यर्थः । वाक् एव=कवितावाण्येव, पराहि =मूलाधारचक्राविष्कृत "परा" परिणतरूपा इव समुत्कृष्टा हि । एषा=एतादृशी त्वत्स्तुतिकविता, युवयोः=पित्रोः, अर्पितवती=समर्पिता सती, सपदि=अनुपदमेव, पूर्णा=युष्मत्तत्त्वप्रतिपादने समग्रा, परतमा=अत्यन्तमुत्कृष्टा सती, नः=अस्माकं, पदेषु=सुप्तिङन्तेषु पदेषु निवासस्थानेष्वपि, स्वान्तेषु=हृदयेषु मनस्सु, सदा=निरन्तरं, वां= युवां (द्वितीया द्विवचनं) प्रकटयतु=प्रकाशयतु । एवं च परारूपिणी परतमा रूपिणी च त्वमेव , परतमारूपिणी तु=शब्दरूपायाः परायाः अपि सूक्ष्मरूपिणी बिन्दुरूपिणी कुण्डलिनीरूपिणीत्यर्थः । तस्याः परायाः अपि मूलकत्वात् । तादृशी सती युवां सूक्ष्मातिसूक्ष्मपरतमरूपिणौ प्रकाशयतु । परा= मूलाधारस्य सूक्ष्मशब्दरूपा, परतरा=ततोपि सूक्ष्मा कारणबिन्दुरूपा, परतमा ततोपिसूक्ष्मा बिन्दोरपिकारणरूपा चिद्रूपा- तथा च परा शब्दादपि परतमायाः चिद्रूपिणोः पित्रोः जगत्पित्रोः तत्त्वप्रकाशने सौलभ्यातिशय इति भावः ।

**Nandini:-** जननि =Mother!, मनोवाक्कायानां =mind, word and body, इदं =this body endowed with consciousness qualified by ignorance (Avidya) युवाभ्यां =from you both, mother and father, आत्तं = has been obtained, मे अखिलं आत्मीयं = my everything is related to you both ("atma vy putranamasi"), परं (तु)= but इह तु = in the case of this work,

वागेव = poesy itself, परा हि= born in the Muladhara, and then transformed, into Pasyanti, Madhyama and Vykhari, एषा= this poem of praise, युवयोः= for both of you,अर्पितवती= has been dedicated to you,सपदि= immediately, पूर्णा=perfect because it expresses your quintessence, परतमा=extremely great because it makes one aware of the paramartha, नः= our, पदेषु= in our words, स्वान्तेषु= in our minds, सदा वां प्रकटयतु = let this work express you both in toto.

Mother ! This whole body, including its mind, word and soul, is obtained from you. Of all the parts, the word in me has become parama, as it is derived from the 'Para' of the Muladhara, i.e. this poem of praise is the replica of thy subtle form. Therefore it is being dedicated to you. Through your grace, may it express you both, the embodiments of word and meaning, perfectly and reside in all the readers' minds and hearts.

**115. विशालक्षीमाता विलसति चिदानन्द अखिलः**
**सदानन्दस्साक्षान्महितशिवलिङ्गार्यजनकः ।**
**तयोर्योगोऽयं स्यात् सदमलचिदानन्दपरमः,**
**सुनन्दिन्येषास्य प्रथयतु शिवानन्दरसधिम् ॥**

**अन्वयः** :– विशालाक्षी माता अखिलः चिदानन्दः विलसति । महितशिवलिङ्गार्यजनकः साक्षात् सदानन्दः विलसति । तयोः योगः अयं सदमलचिदानन्दपरमः स्यात् । अस्य सुनन्दिनी एषा शिवानन्दरसधिं प्रथयतु ।

**नन्दिनी** :– विशालाक्षीमाता=विशालाक्षीनाम्नी अस्मज्जननी, अखिलः चिदानन्दः =अन्यूनः समग्रः ज्ञानानन्दः, विलसति =प्रकशते , महितशिवलिङ्गार्यजनकः=पूज्यः शिवलिङ्गार्यनामा अस्मत्पिता, साक्षात् =प्रत्यक्षतया, सदानन्दः= कालत्रयाबाध्यानन्दस्सन् । विलसति=प्रकाशते । तयोः= उपरि प्रतिपादितयोः उभयोरानन्दयोः, योगः= परमानन्दयोगः, अयं =एषः स्तुतिकर्ता, सदमलचिदानन्दपरमः=सदाशिवज्ञानानन्दः परमश्च, नास्त्यतः परमानन्द इत्यर्थः । स्यात्=भूयात्, एवमेव, अस्य=एतस्य सच्चिदानन्दपरमस्य, सुनन्दिनी =शोभना, नन्दिनी =नन्दयित्री सुताकल्पा कर्तुः स्त्रीसन्तानाभावात् । शिवानन्दरसधिः=सदाशिवानन्दरसनिधानं समुद्रं (समन्तान्मुदं रातीति समुद्रः) तं प्रथयतु=प्रकटयतु, अत एवास्याः स्तुतेरानन्दनन्दिनीत्यभिधानम् ।

**Nandini:-** विशालाक्षी माता = My mother Visalakshi, अखिलः चिदानन्दः विलसति =shines as the joy of unsullied consciousness and wisdom,

महितशिवलिंगार्य जनकः =my great father, Sivalingarya,साक्षात् सदानन्दः विलसति= shines as the joy of the Primodial Existence ('sat'- which is beyond the pales of time) तयोः योगः= their joy-union (Spiritual Union) सदमलचिदानन्दपरमः= always, established in the great joy of Sivajnana, अयं स्यात् = this man (i.e. I, the writer of this work), अस्य सुनन्दिनी एषा शिवानन्दरसधिं प्रकटयतु = may this man's beautiful daughter , called "Anandanandini" flood all with the ocean of Siva-joy.

Mother ! Mother Visalakshi is the joy-form of unsullied and whole wisdom; father Sivalingarya is the joy-form of Primordial Existence. Their union of joy is great, having been established in the Ultimate Joy of Sivajnana. The fruit of that union is the writer of this long poem. This poem of praise , "Anandanandini", is like my daughter (the poet has no daughters. Hence this poetic work itself is his daughter). May this poem flood the hearts of all its readers with the ocean of Siva-joy.

**116. इमा मूलाधाराद्यमलपदसंप्रस्फुटितचि -**
**त्स्वरूपश्रीसर्वस्वकलितसदर्थाः जननि ! ते**
**सुवाचो भूयासुस्त्वयि निहितभावास्सकलधी –**
**वियद्व्यापिस्वात्मप्रगुणितशिवानन्दसुखदाः ॥**

**अन्वयः :–** जननि !मूलाधाराद्यमलपदसंप्रस्फुटितचित्स्वरूपश्रीसर्वस्वकलितसदर्थाः इमाः ते सुवाचः त्वयि निहितभावाः सन्त्यः सकलधीवियद्व्यापिस्वात्मप्रगुणितशिवानन्दसुखदाः भूयासुः ।

**नन्दिनीः–** जननि ! मूलाधाराद्यमलपदसंप्रस्फुटितचित्स्वरूपश्रीसर्वस्वकलितसदर्थाः= मूलाधाराद्यमलपदेषु =अत्र शब्दब्रह्मभूतपराशब्दोत्पत्तिस्थानं मूलाधारः, आदिशब्देन स्वाधिष्ठानमणिपूरौ पश्यन्तीशब्दोत्पत्तिस्थाने, अनाहताख्यं हृदयं मध्यमाशब्दोत्पत्तिस्थानं । कण्ठश्च वैखरीशब्दोत्पत्तिस्थानं इति ग्राह्यम् । अमलानि स्वच्छानि निर्मलानि च तानि पदानि=स्थानानि च एतेषु मूलाधारस्वाधिष्ठान (मणिपूरकनाभि) हृदयकण्ठस्थानेषु, परा– पश्यन्ती – मध्यमा – वैखरीरूपेण चातुर्विध्येन संप्रस्फुटितस्य, चित्स्वरूपस्य = स्फोटब्रह्मस्वरूपस्य केवलं ब्रह्मज्ञानं चित् , तस्याः विचिकीर्षतया घनीभावमापन्नायाः स्वरूपं. कारणबिन्दुरूपं मूलाधारस्थं कुण्डलिन्यादिशब्दवाच्यं स्फुटितं शब्दब्रह्म, तस्य शब्दब्रह्मणः परारूपस्य, श्रियः = पश्यन्ती मध्यमावैखरीरूपायाः स्वर-व्यञ्जन -वर्ण-पद-वाक् -गद्य- पद्यात्मिकायाः सम्पदः, सर्वस्वैः=वाच्यलक्ष्यव्यंग्यार्थस्वारस्यैः, कलितः=संप्रकाशितः, सदर्थः=

सदाशिवब्रह्मात्मतत्त्वपदार्थः यासां ताः इति सुवाचां विशेषणम् । इमाः= एताः , मया त्वद्भावैक्येन प्रणीताः ताः सत्यं तवैव त्वत्तत्त्वप्रकाशिका एवेत्यर्थः। सुवाचः= सद्भावार्थकतया निबद्धाश्शोभनाः वाचः त्वद्दिव्यात्मतत्त्वप्रकाशकाः पद्यरूपाः स्तुतयः, त्वयि= सच्चिदानन्दशिवतत्त्वात्मके त्वय्येव, निहितभावाः =निहिताः स्थापिताः, भावाः=स्वशब्दार्थात्मानः यासां ताः, तथा सन्त्यः, सकलधीवियद्व्यापि स्वात्मप्रगुणितशिवानन्दसुखदाः– सकलानां=समस्तानां प्राणिनां, धीवियति =बुद्ध्याकाशे, व्यापिना=व्याप्तिं गच्छता, प्रबोधकत्वेनेत्यर्थः । स्वात्मना=स्वस्य शब्दार्थरूपस्य, आत्मना= आत्मस्थानीयनवरसरस्या त्मकेनानन्देन, प्रगुणितः= प्रकर्षेण गुणितः= अनेकविधया प्रवृद्धः यः शिवानन्दः= सदाशिवब्रह्मानन्दः तस्य सुखस्य अविच्छिन्नस्य दायिन्यः, भूयासुः=भवन्तु इत्याशंसनं कवेः । अथवा सकलानां= कलाभिस्स्वरोत्पन्नाभिः षोडश सौम्य(चन्द्र)कलाभिः , स्पर्शयुग्मोत्पन्नाभिः द्वादशसूर्यकलाभिः, यकारादिव्यापकवर्णोत्पन्नाभिः दशभिरग्निकलाभिः आहत्य अष्टत्रिंशद्भिः (३८) कलाभिः सहिता वर्णमालारूपिणी वाङ्मयी जगन्माता, सैव सहस्रारगोचरा षोडशी चन्द्रकला, सैव धीरूपा, ज्ञानात्मिका, तदभिन्नात्मकं आकाशं,अभिव्यापि= आसमन्ताद्व्याप्नुवत्- विश्वव्यापीत्यर्थः ।"आत्मैवास्य षोडशी कला" इति बृहदारण्यकोक्तेः, आत्मभिः=जीवात्मभिरपि (भट्टभास्करोक्त विवर.) स्वात्मना=स्वस्य=शब्दार्थरूपस्य, आत्मना= आत्मस्थानीय– नवरसरस्यात्मकेन आनन्देन प्रगुणितः= प्रकर्षेण अनेकविधया प्रवृद्धः यः शिवानन्दः सदाशिवब्रह्मानन्दः तस्य सुखस्य दायिन्यः भूयासुरिति पूर्ववत् । "यो वेद निहितं गुहायां परमे व्योमन् " " आकाशशरीरं ब्रह्म" इति च धियः परमवियदात्मकता, तदभिव्याप्य आत्मनः स्थितिश्च तैत्तिरीयोपनिषदि वर्णिता । एतावता "सकलधीवियद्व्यपिस्वात्मप्रगुणितशिवा नन्दसखदाः इत्यनेन वर्णात्मक– कलारूपेण जनानां बुद्ध्याकाशे व्याप्नुवन्त्या जगन्मात्रा, प्रगुणितस्य=अनन्ततया प्रवृद्धस्य शिवानन्दस्य=सदाशिवब्रह्मानन्दस्य यत्सुखं पुनरावृत्तिरहितशाश्वत सायुज्यरूपं , तस्य दायिन्यः=दात्र्यः भवन्तु–इति कवेः प्रार्थना । अनेन जगन्मातुरेव मूलाधारे शब्दब्रह्मरूपेण स्थितिरिति कृत्वा तत्पारम्पर्यवैभवरूपायाः अस्याः कृतेः सकलबुद्ध्याकाशव्यापिनीरूपेण तस्यामेव शब्दब्रह्मरूपायां ब्राह्म्यां शिवानन्दसुखदायितया एकीभावः प्रार्थितः इति व्यज्यते इत्यलमतिविस्तरेण ।

**Nandini:-** जननि =Mother !, मूलाधारादि अमल पद संप्रस्फुटित =the spotless places namely Muladhara, Manipura, Anahata and Visuddha. where in a sequence, the Para,Pasyanti, Madhyama and Vykhari word-forms evolve gradually, चित् स्वरूप = Sphotaword form'of the ParaVak, श्री =The riches of vowels, consonants and words forming into the varied configurations of poetry and prose, सर्वस्वकलित

सदर्थाः=shining form of Sivatattva as the ultimate meaning arrived at through the subtleties of vachya, lakshya and vyangya meanings, इमाः ते सुवाचः= These poems in the "Anandanandini" blooming through me,त्वयि निहितभावाः= keeping you and you alone in the mind, सकल धीवियत् व्यापि= pervading in everyone's intellectual space,स्वात्म = with the joy that is the Soul of the Word and its Meaning, प्रगुणित= multiplied, शिवानन्दसुखदाः भूयासुः= Let them be givers of the ultimate soul-joy, [Another meaning: सकलधी =the 'word' form comprising the kalas (sixteen vowel -Chandrakalas, the twelve Suryakalas formed out of sparsayugmas and the ten Agnikalas), वियद्व्यापि= (the sound) pervading the sky, स्व+आत्म = The soul of the word and its meaning i.e. the joy of Primordial Entity].

These poems of thy praise , my mother !, are verily your forms only evolving gradually and clearly from the birth-places (Muladhara, Manipuraka, Anahata and Visuddha) of Para, Pasyanti, Madhyama and Vykhari vak. Naturally, their meanings shine forth the riches of thy joy and wisdom. This is because of the fact that they are all written keeping you alone in the mind as the dhyeya. May they pervade in the intellect-space of all beings ! May the soul-joy bestowed by them be redoubled by the riches of the imagination embodied in them !

"Sakaladhi" - the word 'kala' gives a speical meaning: Mother! you are the "vital point" formed of Siva-Sakti Union. With the desire of writing this praise-poesy the power of consciousness in me solidified and gradually assumed the form of the subtlest Nada, Nirodhika and Ardhchandra. From that, you have evolved into the Causal Particle form in my Muladhara and assumed the causal form (Para) of Sabdabrahman. Afterwards, you have evolved into the Effectual Particle Form in my Manipuraka and assumed the Analysing Pasyanti form. From that, you have evolved into the Nada-form in my heart and assumed the intellect-blending Madhyama vak. Then finally, you have evolved into the seed-like letter-word-sentence form in my vocal cords and assumed the Vykhari waveform of vak.

Thus the Word is your form alone. That has now transformed itself into this praise-verse. May this praise-poem through its letters, words ad poetic stanzas bestow ever new joy on its readers.

117. विशालाक्षीमातस्तव च शिवलिङ्गार्यसुधियः
स्वयोगानन्दात्माऽहमिह चरमोऽस्यात्मरसजा ।
सुनन्दिन्येषा वां प्रथयतु शिवौ विश्वसुमनो
मनोबुद्धिस्फारस्फटिकमुकुरे सौम्यललितौ ॥

**अन्वयः** :– विशालाक्षीमातः तव शिवलिङ्गार्यसुधियश्च स्वयोगानन्दात्मा अहं इह चरमः (अस्मि)। अस्य आत्मरसजा सुनन्दिनी एषा वां सौम्यललितौ शिवौ विश्वसुमनोमनोबुद्धि स्फारस्पटिकमुकुरे प्रथयतु ।

**नन्दिनी** :– विशालाक्षीमातः=हे विशालाक्षी नाम्नी अस्मज्जननि ! तव शिवलिङ्गार्यसुधियश्च=शिवलिङ्गार्यनामकसद्विदुषश्च, स्वयोगानन्दात्मा–स्वयोः=स्वात्मनोः= यो योगः, तज्जनितो य आनन्दः, तत्स्वरूपः अहं, उभययोगानन्दकन्दलरूपोऽहमित्यर्थः । "आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते " इति भवभूत्युक्तेः । इह =अस्मिन् लोके, चरमः=तयोः पुत्रेषु अन्तिम इत्यर्थः । अस्मीति शेषः । अस्य =एतादृशस्यास्य मम, आत्मरसजा=आत्मानन्दजा मातृस्तुतिरचनायां तदैकात्म्यभावानन्देन प्रोद्भूता, सुनन्दिनी=सुष्ठुनन्दयन्ती आनन्दयन्ती सुता एषा, वां=युवां विशालाक्षी–शिवलिङ्गार्यौ, सौम्यललितौ -सौम्यौ=शान्तौ सात्त्विकौ,ललितौ च =सुकुमारसुन्दरौ च, ओमा=ॐकारेण सहितौ सौम्यौ=तत्सम्बन्धिनौ ॐकारस्वरूपिणाविति यावत् ,सोमः=चन्द्रः तेन शिरसि सम्बन्धिनौ सौम्यौ =चन्द्रकला धराविति यावत् । सौम्यौ ललितौ चेत्युभयविशेषणकर्मधारयः, शिवौ =शिवा च शिवश्च शिवौ पार्वतीपरमेश्वरौ तदात्मानावित्यर्थः । विश्वसुमनोमनोबुद्धिस्फारस्फटिकमुकुरे =सर्वेषां सुमनस्कानां देवानां च संकल्पविकल्पनिश्चयात्मकयोर्मनोबवद्ध्योरुभयरूपे विशाले स्फटिकदर्पणे, प्रथयतु = प्राकश्यतु विश्वसुमनोमनोबुद्धि स्वात्मस्फटिकमुकुरे इति पाठे -विश्वेषां= विश्वस्थितानां सर्वेषां च, सुमनसां= सन्मनस्कानां देवानां च शोभनमननशीलानामित्यर्थः । मनश्च बुद्धिश्च स्वात्मा च मनोवुद्धिस्वात्मानः सङ्कल्पविकल्पात्मकवृत्तिमदन्तःकरणं मनः । निश्चयात्मिकान्तःकरणवृत्तिः बुद्धिः । चैतन्याश्रयः तदुभयात्मकः स्वामी आत्मा । एतदात्मकः स्फटिकमुकुरः =स्फटिकमणिदर्पणः, तस्मिन् प्रथयतु= प्रकाशयतु । "इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिः" इत्युपनिषदुक्त्यनुसारेण-इन्द्रियेभ्यः मनः, मनसः बुद्धिः, तस्याः आत्मा पर इति स्पष्टम् । मनसः अन्तरिन्द्रियत्वात्सुखाद्युपलब्धिसाधनं सत् मनः इन्द्रियांशो भवति, निश्चयेनावगन्तृत्वात् आत्मांशश्च भवति । एवं च ब्रह्मात्मज्ञानांशबुद्ध्युत्पन्नः शब्दः स्वप्रपञ्चेन तस्मिन्नेव प्रविश्य प्रकाशतामिति भावः । "यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेद् ज्ञान आत्मनि" इत्युपनिषदुक्त्या वाचः तदुपलक्षित-

सर्वेन्द्रियाणि च मनसि, मनसः ज्ञाने, ज्ञानस्य महति आत्मनि, महात्मनः शान्ते आत्मनि, उपसंहारस्य प्रतिपादितत्वात् इयं वाग्रूपा स्तुतिः मनसि संभूता क्रमेण ज्ञानाभिन्न विश्वजनमनोबुद्ध्यात्मकरूपस्फटिकदर्पणे शिवौ प्रकाशयतु इति सारार्थः।

**Nandini:-** विशालाक्षीमातः= O mother Visalakshi !, तव =your, शिवलिंगार्यसुधियश्च =of Pandit Sivalingarya, स्वयोगानन्दात्मा अहं =I, the embodiment of your mutual joys, इह =in this world, चरमः अस्मि =I am the youngest of all your childern, अस्य =of this your child, आत्मरस जा =born out of his soul-joy, सुनन्दिनी =his joy-giving daughter, एषा =this praise-poem called Anandanandini, सौम्यललितौ शिवौ वाम् =you both who are peaceful, serene Omkaraswarupas, beautiful and auspicious forms, विश्व = in the universe, सुमनो =of good- minded, learned, divine beings, मनोबुद्धि =Mind and intellect [Mind is a conglomeration of propositions and dispositions the inner organ which determines is the Intellect] स्फारस्फटिकमुकुरे प्रथयतु = may it be reflected in a wide crystal-clear mirror !

Mother ! I am the youngest of all, resulting from the joy-union of Visalakshi and Sivalingarya. This Matrstuti (Anandanandini) is my daughter born of my soul-joy. This daughter of mine has made good the absence of a daughter-child for me. My parents were peaceful and serene. Therefore they are of the form of Omkara. May this poem of praise reflect the auspicious forms of my parents in the crystal-clear-mirror-minds and intellects of all learned, divine-like readers.

**118. सुतस्यास्य स्वीये ललितशिशुसंध्यानलपिते**
**प्रवृत्तं स्खालित्यं सकलमपि संक्षम्य नितराम् ।**
**इमं स्वीकुर्वम्ब ! स्वरसहृदयेन प्रमुदिता**
**शिशोर्मात्रानन्दः स्खलितलपिते खल्वतिशयः ॥**

**अन्वयः :–** अम्ब अस्य (ते) सुतस्य ललितशिशुसंध्यानलपिते प्रवृत्तं स्खालित्यं सकलं अपि नितरां संक्षम्य प्रमुदिता सती स्वरसहृदयेन इमं स्वीकुरु । शिशोः स्खलितलपिते मात्रानन्दः अतिशयः खलु ।

**नन्दिनी :–** अम्ब ! अस्य ते सुतस्य, स्वीये =स्वकीये, अत्र "स्वशब्दः" मातरं सुतं च वक्ति, मातृविषयित्वात् मातृसम्बन्धिनि सुतरचितत्वात् सुतसम्बन्धिनि इत्यर्थः । ललित

शिशुसंध्यानलपिते =सुकुमारस्य शिशोः= अनभिज्ञस्य, संध्यानलपिते=सम्यक् ध्यानेन =एकाग्रचिन्तनेन निमित्तेन प्रवृत्ते, लपिते = उक्तौ पद्यस्तुतिभाषिते, अथवा ललितेन =सुकुमारसुन्दरेण, शिशुसंध्यानेन =त्वत्बालकस्य एकाग्रचिन्तनात्मकेन निमित्तेन, बालध्यानस्य तदेकाग्रतातिशयसम्पन्नत्वात् । उक्ते पद्यस्तुतिभाषिते, प्रवृत्तं=नियमातिक्रमेण उद्वृत्तं लुठितं (दोरलिन इति भाषायां) स्खालित्यं= शास्त्रादीनां सर्वेषां मर्यादातिक्रमणानां सम्बन्धि, सकलमपि=सर्वमपि नितरां संपूर्णमशेषं, संक्षम्य=सम्यक् शान्ततया क्षमित्वा । " यतो वाचो निवर्तन्ते अप्राप्यमनसा सह" इति वेदोक्त्या जगन्मातुर्मातुः तत्त्वस्य वचोऽतीतत्वात् भावैकप्राधान्येन अनुगृह्य, प्रमुदिता=प्रकर्षेणानन्दितासती, इमं=नुतिकर्तरं तव सुतं, स्वस्य हृदयेन =आत्मरसार्द्रहृदयेन आत्मानन्दपूर्णहृदयेन, स्वीकुरु= स्वात्मीयतया गृहाण स्तुतिं स्तुतिकर्तरं च स्वात्मप्रकाशकतया अनुमोदयेति भावः । यतः यस्मात्कारणात् , शिशोः= स्वबालकस्य, स्खलितलपिते=वर्णपदवागादिमर्यादातिक्रमकृतलोपभूयिष्ठे भाषितेऽपि, मात्रानन्दः=जगन्मातुः मातुः आनन्दः, अतिशयःखलु=अधिकः खलु , वचनैरनिर्वचनीयं शिशोर्हृदयं तादृशानिर्वचनीयमातृतत्त्वैकं हृदयं मातैव ज्ञातुं कुशाला इत्यत स्तस्यैवानन्दातिशयः इति भावः । अत्र कविः स्वमातृस्तुतिं माता स्वानदातिशयेनैव स्वीकरोतीति व्यनक्ति ।

**Nandini:-**अम्ब =Mother !, अस्य =of this your son, स्वीये =his own poem of mother's eulogy, ललितशिशु =of your tender and ignorant son, संध्यानलपिते =in his well-thoughtout words born of meditation, प्रवृत्तं स्खालित्यं सकलमपि = the errors that have crept into them, नितरां संक्षम्य =excusing them all with an understanding mind, प्रमुदिता =enjoying (with the view that these are the words of a young child),इमं =this your son, the author of this praise-piece, स्वरसहृदयेन =with a joy-drenched heart, स्वीकुरु =please accept this as it is your own, शिशोः स्खलितलपिते मात्रानन्दः अतिशयः खलु =Indeed the mother's pleasure is always great when she listens to the error-ridden faltering and blundering words of her own child.

Mother ! I am your child. I always think of thee alone. I have described thee in this praise–poem called "Anandanandini". I, being a child, might have committed many an error in letters, words and sentences. I pray you, my mother ! ,that you take the great feeling obscured by the blundering words in the right perspective. I request you to excuse me for this and accept this praise–poem. Generally a mother takes pleasure in the uncouth prattle and gibberish of her child, and never gets annoyed . Not only the mother

but everyone who listens to the fond prattle of children gets pleasure only and never raises his finger at the error. In the same way, O my mother! excuse the errors in this work, and accept this by taking the purport eclipsed by the errors.

119. जगन्मातुर्मातुर्मम नुतिवचस्सु प्रलुलितं
समस्तं स्खालित्यं सरससुधियः क्षन्तुमुचिताः ।
शिशोर्मात्रासक्तिप्रकटमुदितंस्वस्य सकले
न न प्रीतस्सर्वो भवति लपिते मुग्धमधुरे ॥

अन्वयः :– सरससुधियः जगन्मातुः मम मातुः नुतिवचस्सु प्रलुलितं स्खालित्यं समस्तं क्षन्तुमुचिताः सर्वः मात्रासक्तिप्रकटमुदितस्वस्य शिशोः मुग्धमधुरे सकले ललितलपिते न प्रीतः भवति इति न ।

नन्दिनी :– सरससुधियः–सरसाः=काव्यतत्त्वरसज्ञाः सुधियश्च=सुज्ञानिनश्च विद्वांसः, मम, जगन्मातुः= जगन्मातृरूपं गतायाः, मातुः=जनन्याः विशालाक्षीदेव्याः, नुतिवचस्सु=स्तोत्रवाग्रूपेषु कवनादिषु, प्रलुलितं=अज्ञतया वा अनज्ञताया वा प्रवृत्तं, स्खालित्यं– स्खालितानां=शास्त्रादिसर्वमर्यादातिक्रमणानां सम्बन्धि, समस्तं= सर्वं, क्षन्तुं=क्षमितुं , उचिताः=योग्याः तैः क्षन्तव्या एवेत्यर्थः । सर्वः= सकलो जनः, मात्रासक्तिप्रकटमुदितस्वस्य –मातरि =जगन्मातरि मातरि, आसक्त्या= विषयान्तरपरिहारेण केवलमातृविषयावलम्बनरूपया, नित्यसायुज्यसङ्गेच्छयेत्यर्थः । प्रकटेन =प्रकर्षेण , मुदितः सन्तुष्टः, स्वः=स्वात्मा यस्य सः, तस्य =तादृशानन्दितात्मनः, शिशोः=बालस्य, मुग्धमधुरे =अमायिकतया सुन्दरे मधुरे च । सकले=समस्ते मातृकलामये (शिशोर्मात्रासक्त त्वात् ), ललितलपिते= सुकुमारमनोहरवचस्संलापे, पद्यवचसीत्यर्थः । न प्रीतः= असन्तुष्टः भवति इति, न= नास्ति, सर्वस्समानन्दित एव भवतीति भावः। शिशोः वर्णपदवागादीनां अस्पष्ट–लोप–आदेश–आगम–व्यत्ययादि संश्लिष्ट वर्णपदवागालापे न केवलं मातुः अपितु सर्वेषामपि तत्संभावितार्थावगत्या सह आनन्दातिशय एव भवति नतु दोषलेशस्यापि परिज्ञानं तस्यापि गुणोत्तरभावुकतैवानुभूयते – इति सर्वानुभूतविषय एव। "देवो वरदोऽपि देवपूजको न वरदः" इति कृत्वा अत्र कविः मातृस्तुति (कर्तृ) स्वीकाराय सरसविद्वज्जनं प्रार्थयतीति विशेषः ।

**Nandini:-** सरससुधियः=The litterateurs and literary ciritcs, मम जगन्मातुः मातुः=of my mother, who has merged herself into the form of the Divine Mother, नुतिवचस्सु= poetic words of praise, प्रलुलितं स्खालित्यं =the blunders that have dropped into this knowingly or unknowingly, समस्तं क्षन्तुं उचिताः=it meets your stature to excuse me, सर्वः=all people, मात्रासक्तिप्रकटमुदितस्वस्य = who has a happy spirit with the only unsul-

lied desire of being with the mother always. शिशोः=of the child, मुग्धमधुरे =innocent and sweet, सकले =being suffused with the kala of the mother (the mother's instinct) [the child has only one spotless desire of being with the mother for ever], लपिते = the tender and appealing words of the poesy, न प्रीतः भवति इति न = there is no such thing as being not satisfied by it i.e. everybody gets satisfied with it.

Mother ! These poems are the verbal pictures of thine. May the litterateurs and critics excuse the various mistakes that might have crept in here intentionally or unintentionally with their large-heartedness ! These poems have come out of this poet-child's pure desire to be with the mother always and forever. A child learns words from its mother only. The reason for this is not to be found in the love it bears towards the mother's words or her actions; it is due to the pure love it has towards its mother herself. This love means a feeling of merger with the mother. Therefore, it never leaves her even though others invite its attention; it utters and does as the mother utters and does. This uncouth prattle, words coming out in an effort to imitate and follow the lip-movement of the mother, is always enjoyed by everyone, never detested though it is beset with unclear and mangled words.

In the pevious poem, the mother is prayed to excuse the errors. In this, the learned readers are requested to excuse the inadvertent errors that might have made their way into the work with the view underlined above.

**120. स्तुतिं सर्वां ह्येतां य इह पठति श्रावयति च**
**विपद्भ्यस्सर्वाभ्यस्सपदि च समुद्धृत्य नितराम् ।**
**समायोज्य श्रीभिस्सकलमहिमोदारगुरुभिः**
**जगन्मातर्मातस्तव नुतिरियं नित्यमवतात् ॥**

**अन्वयः** :– इह यः एतां स्तुतिं सर्वां पठति श्रावयति च, तं सपदि सर्वाभ्यः विपद्भ्यः समुद्धृत्य, सकलमहिमोदारगुरुभिः श्रीभिः समायोज्य, हे जगन्मातः मातः इयं तव नुतिः नित्यं अवतात्।

**नन्दिनी** :– इह=अस्मिन् भूलोके, यः, एतां स्तुतिं =आनन्दनन्दिनीनाम्नीं ,जगन्मातुः मातुः स्तुतिं , पठति= स्वयं पठति, श्रावयति च =इतरेभ्यः श्रावयति च, तं =तादृशं पठितारं श्रावयितारं च, सपदि=अनुपदमेव अनलसं, सर्वाभ्यः विपद्भ्यः= समस्ताऽपद्भ्यः, समुद्धृत्य=सम्यक् निरपायं तानुद्धार्य सकलमहिमोदारगुरुभिः=सकलैः महिमभिः, उदारेण च

= परकार्य निर्वाहकगुणेन च , गुरुभिः=संभराभिः महतीभिः, श्रीभिः= सर्वसम्पद्भिः, समायोज्य= सुसंपन्नं कृत्वा, हे जगन्मातः मातः= जगन्मातृभूते अस्मज्जननि!, इयं तव नुतिः=एषा मद्रचिता आनन्द नन्दिनीति ते स्तुतिः, नित्यं =सदा, अवतात् =रक्षतु ।

**Nandini:-** जगन्मातः मातः=O Divine Mother in the form of my earthly mother!,यः एतां स्तुतिं इह पठति श्रावयति च =one who reads this praise-poem for himself or for others to listen to, तं =him, सपदि =at once, सर्वाभ्यः विपद्भ्यः=from all dire circumstances and dangers, समुद्धृत्य=lifting him up (redeeming him), सकलमहिमोदारगुरुभिः श्रीभिः समायोज्य = makes him abound with the large riches of greatness and Samaritanship, इयं नुतिः= this praise-poem Anandanandini, नित्यं अवतात् = may it ever protect you !,

O Divine Mother in the form of my earthly mother ! May this praise- piece bestow all types of riches on all its readers and listeners and lift them up well above all dire circumstances and dangers.

**121. नुतिं ह्येतां पूर्णां पठति मधुरं गायति च य-**
**श्शृणोत्येवं तत्त्वं परिसमधिगत्यार्द्रहृदयः ।**
**तदेकैक्यं सौम्यं निजमनसि संभावयति च**
**जगन्माता माता स्वरसमिह तस्मै प्रदिशति ॥**

**अन्वयः :–** यः एतां पूर्णां नुतिं पठति मधुरं गायति श्रुणोति च, एवं , तत्त्वं परि समधिगत्य आर्द्रहृदयस्सन् निजमनसि सौम्यं तदेकैक्यं संभावयति च तस्मै इह माता जगन्माता स्वरसं प्रदिशति ।

**नन्दिनी :–** यः, एतां=आनन्दनन्दिनीनाम्नीं, पूर्णां नुतिं=संपूर्णां स्तुतिं अविहाय किञ्चिदपीत्यर्थः । पठति, मधुरं गायति =सर्वहृदयाह्लादं यथा वाद्यगात्रैः, गायति श्रुणोति च, एवं =तथैव, तत्त्वं =स्तुतिव्यक्तं मातृतत्त्वं, परिसमधिगत्य=परिपूर्णतया ज्ञात्वा, आर्द्रहृदयः=तदेकरसार्द्रहृदयः, सन्, निजमनसि =स्वचित्ते, सौम्यं =शान्तं षोडशकलामयं उमामहेश्वरात्मकं ॐकारात्मकं च, तदेकैक्यं =तेन केवलसदाशिवस्वरूपेण, एका=एकीभूता चित्स्वरूपिणी शिवा, तया ऐक्यं=स्वात्मनः= जगन्मातृसुतात्मनः आनन्दात्मकस्य एक्यं= सच्चिदानन्दरूपतयैक्यरूपं, संभावयति च =सम्यक् भावयति च, तस्मै मे = मम, माता, विशालाक्षीमात्रभिन्ना, जगन्माता=जगदम्बा, इह=अस्मिन् लोके, स्वरसं–स्वस्य=आत्मनः मात्रात्मनश्च, मातृरूपब्रह्मात्मन इत्यर्थः। रसं=आनन्दं तदभिन्नस्वात्मानन्दं च, प्रदिशति =प्रकर्षेण ददाति । अत्र प्रकर्षः अविच्छिन्नसमुत्कर्षकृत इत्यवगन्तव्यम् । एतद् द्वयं फलश्रुतिः । पूर्वपद्ये

स्तुतिप्रभावो वर्णितः अस्मिन् पद्ये तु स्तुत्यप्राभावो वर्णित इति विशेषः ।

**Nandini:-** यः पूर्णां एतां पठति, मधुरं गायति च =One who reads and sweetly sings this long poem fully, एवं =along with it, तत्त्वं परिसमधिगत्य =grasping completely the sum and substance of the mother's nature expressed in it, आर्द्रहृदयः=being moved by it [appreciating it with approbation], निजमनसि = his mind, सौम्यं =the peace of the moon-cool Primordial Vibration (omkara),तदेकैक्यं =merging himself with the Sivasakti, संभावयति च =one who feels its purport clearly and steadfastly तस्मै =to him who reads, sings, listens and meditates on the mother's whatness and who attains the consequent merger with the Divine Mother, माता जगन्माता =the Divine Mother in the form of my mother Visalakshi, इह =in this world, स्वरसं =the joy of the Divine Mother, and the soul-joy that is not at all different from it, प्रदिशति हि =it gives uninterruptedly.

May the Divine Mother in the form of my earthly mother bestow on all those who read, sing, listen to this praise— poem and meditate on the mother's quintessence embedded in its every line, divine ever-new joy and bless all of them with Matrusayujya.

**122. सुवागर्थसुसंपृक्तपार्वतीपरमेशयोः।**
**पित्रोर्विश्वस्य दाम्पत्ये सत्येऽनन्ते सदाशिवे ॥**

**123. ब्रह्मात्मैक्यचिदानन्दे दाम्पत्यं नौ निलीयताम् ।**
**इतीमौ प्रार्थयेतेऽम्ब ! प्रमीलाचन्द्रशेखरौ ॥**

**अन्वयः** :– विश्वस्य पित्रोः सुवागर्थसुसंपृक्तपार्वतीपरमेशयोः सत्ये अनन्ते, सदाशिवे ब्रह्मात्मैक्यचिदानन्दे, दाम्पत्ये, नौ दाम्पत्यं निलीयताम् इति अम्ब इमौ प्रमीलाचन्द्रशेखरौ प्रार्थयेते ।

**नन्दिनी** :– विश्वस्य पित्रोः =जगत्पित्रोः – सुवागर्थसुसंपृक्तपार्वतीपरमोशयोः वाक् च अर्थश्च वागर्थौ= वाक्स्वरूपिणी सरस्वती तन्मूलस्वरूपी तत्प्रतिपाद्यपरमार्थस्वरूपी पर ब्रह्मा चे त्यर्थः । शोभनौ च तौ वागर्थौ सुवागर्थौ आनर्थक्यनिवारणाय सुशब्दविशेषणम् । ताविव=वागर्थविव वाणीहिरण्यगर्भाविव, सुसंपृक्तौ=अविनाभावेन दृढसम्बद्धौ, पार्वतीपरमेश्वरौ सभङ्गश्लेषेण हरिहरदम्पती इत्यर्थश्च, सुवागर्थसुसंपृक्तौ च तौ पार्वतीपरमोश्वरौ चेति कर्मधारयः । तयोः =उमामहेश्वरयोः अथवा हरिहरदम्पत्योः, सत्ये=त्रिकालाबाध्ये अविकारे,

अनन्ते= अमरे कुतश्चिदप्यविभाज्ये सदाशिवे =सदाशिवपरतत्त्वस्वरूपे, अत एव ब्रह्मात्मैक्यचिदानन्दे =ब्रह्मात्मनोः एक्यरूपे सत्यज्ञानानन्दस्वरूपे, दाम्पत्ये=जायापत्यैक्यभावे, नौ=आवयोः प्रमीला–चन्द्रशेखरयोः दाम्पत्यं= जायापत्यैक्यभावः, निलीयतां = निश्शेषेण लयं गच्छतु । इति =एवमुक्तप्रकारेण अम्ब!= हे जगन्मातः= मातः! त्वामित्यध्याहारः इमौ=एतौ तव भक्तपुत्रौ प्रमीलाचन्द्रशेखरौ तदाख्यौ दम्पती पार्थयेते =प्रार्थनां कुर्वाते ।

अत्र रघुवंशमहाकाव्ये कविकुलगुरुकालिदासमहाकविकृतजगत्पितृवन्दनश्लोकादेव त्रैमूर्तदाम्पत्यस्यक्रोडीकरणाय तदीयवागर्थाविव भक्त्या तदनुग्राह्यतया स्वीकृताविति सहृदया न्निवेदयामि । तत्र कालिदासमहाकविना आपाततः पार्वतीपरमेश्वरवन्दनमेवाकारि । परं तु सूक्ष्मतया विचार्यमाणे जगत्पितृपार्वतीपरमेश्वरशब्दः हरिहरदाम्पत्यगर्भितः परिदृश्यते। तयोरुपमानकोटौ वाणीहिरण्यगर्भदाम्पत्यमपि परब्रह्मपारम्यं (हिरण्यं=तेजः तेजोमयी वागिति छान्दोग्योक्त्या वाङ्मयत्वं ब्रह्मणस्सिद्धमिति हिरण्यगर्भशब्दः व्याख्यात्रा उपात्तः) संनिबद्धम् ततश्च वागर्थप्रतिपत्तये इति वाणीहिरण्यगर्भरूप परा-परमार्थयोगतत्त्वज्ञानमुद्देश्यतया साध्यतया दिव्यदाम्पत्येनानुग्राह्यतया च अभिलषितम् - इत्यहो महाकवेः "तव प्रसादस्य पुरस्तु सम्पदः" इति स्कोक्तन्यायानुसारेण वन्दनात्प्रागेवानुगृहीतस्वाभिलषितस्य कालिदासस्य रस्यपरमार्थपूर्णवागर्थयोजनासामर्थ्यम् । तथा च कालिदासमहाकविना तत्साधकतया तदनुग्राहकतया च हरिहरदाम्पत्यवन्दनमनुष्ठितम् । एतेन प्रकृते हरिहरदम्पती वागर्थाविव अन्योन्यद्योतकतया संपृक्तौ सतौ वागर्थतत्त्वरूपं "तत्वमसि" "अहं ब्रह्मास्मि" इत्यादि महा वाक्यार्थतत्त्वरूपं ब्रह्मतत्त्वज्ञानं अनुगृह्णीतः इति प्रतीयते । तादृशे मनोवाक्काययोगरूपे त्रैमूर्ते दाम्पत्ये स्तोतुः दाम्पत्यं प्रमीलाचन्द्रशेखरप्रवृत्तं निश्शेषेण लीयताम् =अपुनरावृत्तरहितशिवसायुज्यसिद्धिर्भूयादिति भावः । सुवागर्थ सुसंपृक्तेत्यत्र सुशब्दग्रहणं दुर्वागर्थौ तद्योगश्च पार्वतीपरमेश्वरयो– रुपमानबाह्याविति व्यनक्ति ।

**Nandini:-** विश्वस्य पित्रोः= of the Parents of the Universe, सुवागर्थ =like the pretty words and their meanings (of the word– form of Saraswati and the meaning-form of Brahma), सुसंपृक्त =firmly and steadfastly related togethers with inseparable connection or communion, पार्वतीपरमेशयोः=of Parvathi and Parameswara (of Parvatipa Siva and Ramesa Vishnu) or Lakshmi],सत्ये =beyond the pales of time; unchanging, अनन्ते =immortal, सदाशिवे =of the form of the Sadasivatattva, ब्रह्मात्मैक्यचिदानन्दे =of the form of true knowledge and eternal joy, दाम्पत्ये =in the inseparable oneness of the husband-and-wife, नौ =of us, Pramila and Chandrasekhara, दाम्पत्यं =the

oneness of husband-and -wife, निलीयतां इति =may it merge completely, अम्ब =mother, (त्वां) =you, इमौ प्रमीलाचन्द्रशेखरौ प्रार्थयेते =these your children-devotees, namely Pramila and Chandrasekhara pray earnestly.

The conjugal union of the Universal Parents is well-bound and eternally bound like the word and its meaning. It is true, i.e. beyond the pales of the divisions of time. It was of the form of Satiparameswara in the past. It is now of the form of Parvati Parameswara. It is eternal and endless. Their conjugality has begun with the marriage of Parvati and Parmeswara, but it has no end. From the day we have known that the meaning of the word "Book" is a pile of papers stitched up at one end, we recognize on seeing that object as that denoted by the word 'book'. In the same way, on hearing the word 'book' we know at once the object which is the embodiment of the meaning of that word. Thus the relation between a word and its meaning is indestructible and inseparable. In the same way, the conjugality of Parvati and Parameswara is also indestructible and inseparable. Hence it is eternal. It is of the form of Sadasiva i.e. It is auspicious to the universe as it is of the form of the merger of Parabrahmajnana and Jeevatmajnana. This merged form is a complex called Existence-Knowledge-Bliss. May the conjugality of Pramila and Chandrasekhara (the present poet and his wife) engross itself in the indestructible conjugality of Paravati and Parameswara.

The poet here recalls to our minds the words of Mahakavi Kalidasa. " Vagarthaviva sampruktau.....". He points out by recalling so, that there is subtle point to be noted. Mahakavi Kalidasa seems to salute in the beginning of his "Raghuvamsa" Vagartha - like eternally bonded parents of the Universe, Parvati and Parameswara, for the revelation of the Primordial Word and its Meaning. But when probed into it, we find the subtle meaning in the compound "Parvatipa-Rameswarau". When decomposed in this way we find that the conjugal unions of Hari and Hara as well are meant here. Not only these two unions. There is another conjugal union implied in the simile "Vagarthaviva sampruktau" of Vani and Brahma. All these three conjugal communions are here prayed to

bestow on him "Vagarthapratipatti " that ultimate knowledge which when known, everything becomes known and nothing remains eclipsed. It therefore means that he is asking for the blessings of all the ancient husbands and wives to bless him with the revelation of the meaning of the great pregnant sentences "Tat Twam Asi' "Aham Brahmasmi" etc. We bow to the nonpareil genius of Kalidasa who has embedded so much in that small poem.

**124. सुस्थिराया मातृभक्तेः प्रजागृत्यै जनेष्विमाम् ।**
**मातृस्तुतिं चकाराथ्य्राँ भार्गवश्चन्द्रशेखरः ॥**

**अन्वयः** :– भार्गवः चन्द्रशेखरः जनेषु सुस्थिरायाः मातृभक्तेः जागृत्यै इमां अर्थ्यां मातृस्तुतिं चक्रे ।

**नन्दिनी** :– भार्गवः= भृगुवंशसमुत्पन्नः श्रीवत्ससगोत्रीयः, चन्द्रशेखरः=तदाख्यः, जनेषु =सर्वजनेषु, सुस्थिरायाः= अचञ्चलायाः, मातृभक्तेः= मातृसेवातत्परतायाः, प्रजागृत्यै =प्रकर्षेणोद्बोधनाय, इमां =एतां, आनन्दनन्दिनीनाम्नीं, अर्थ्यां =गम्भीरार्थवतीं तत्त्वार्थवतीं अभिलषणीयां च, स्तुतिं =स्तोत्रकवितां, चकार=अकरोत् । अस्याः स्तुतेः जनेषु अचञ्चलमातृभक्तिजागरणं कविनोद्दिष्टमिति भावः ।

**Nandini:-**भार्गवः चन्द्रशेखरः=Chandrasekhara (the poet) born in the family of the seer Bhrigu, जनेषु =in all people, सुस्थिरायाः=firm and steadfast, मातृभक्तेः=of the devotion towards the Divine Mother, प्रजागृत्यै=for waking it up, इमां =this poem Anandanandini, अर्थ्यां =desired by all and containing the quintessence of truth, स्तुतिं चक्रे =prepared this poem of praise.

This "Anandanandini" expounding the quintessence of truth, is written by Chandrasekhara born in the lineage of Bhrigu, to inculcate in all people a steadfast devotion towards the Divine Mother.

**125. आनन्दनन्दिनी ह्येषा भूयादानन्दनन्दिनी ।**
**स्वेष्टश्रेयःप्रदानेन मातृभक्त्या नृणां भुवि ॥**

**अन्वयः** :–एषा आनन्दनन्दिनी भुवि नृणां मातृभक्त्या स्वेष्टश्रेयःप्रदानेन आनन्दनन्दिनी भूयात् हि ।

**नन्दिनी** :– एषा =१२५ श्लोकपरिमिता, आनन्दनन्दिनी,=तदाख्या मातृस्तुतिः, भुवि=भूलोके , नृणां=मानवानां सर्वेषां, मातृभक्त्या = मातृसेवोपासनातत्परभावनया (साधनेन) स्वेष्टश्रेयःप्रदानेन =स्वाभिलषितशाश्वतसुखसम्पत्प्रदानेन हेतुना, आनन्दनन्दिनी =अनुभूयमानस्य ब्रह्मानन्दस्यापि,

नन्दिनी=आनन्ददायिनी, भूयात् =भवेदित्यर्थः ।

**Nandini:-**एषा आनन्दनन्दिनी =This praise-poem called "Anandanandini", भुवि =on this earth, नृणां = for all human beings, मातृभक्त्या =with the devotion towards the Divine Mother, स्वेष्ट श्रेयः प्रदानेन =by granting them their desired objects and also the emancipation from worldly bondage, which emancipation is the real, permanent happiness, आनन्दनन्दिनी भूयात् =may it bestow on them ever-new joy.

May this praise-poem "Anandanandini" grant to all human beings steadfast devotion towards the Divine Mother ! Through this boon, may she shower all desired things on them ! Not only that. May she grant them the most desirable emancipation from all worldly bondages, which is the real and permanent happiness. Let this praise-piece "Anandanandini" which gives joy to the Divine Mother, who is herself the embodiment of ever-new-joy, be true to its name !

"Nandini" is the name of the divine cow of Vasishtha Maharshi. "Anandanandini" would then mean "Anandadhenu" meaning thereby that this poem is like the Divine milch-cow milking ever-new joy to all truth-seekers.

-Peace to all -

Let us all experience that ever-new joy for ever

## वासरज्ञानसरस्वती प्रार्थना

नदी तव पुरस्सदा वहति देवि गोदावरी
तथा झरति ते पुरः शिशुमुखाच्च वाचां धुनी ।
चिराद्रसधिमेति सा प्रलयनश्वरं किं तु तत् –
परा नयति नित्यचिद्रसधिमम्ब ! सद्योऽखिलम् ॥

वासरज्ञानस्वरस्वतीप्रार्थनेयम् व्याख्यान्ते निबद्धा ।तत्परा=तस्याः प्रथमोक्तायाः गोदावरी–नद्याः परा=अनन्तरेक्ता शिशुमुखनिर्गता वाचां धुनी । तत्परा भगवत्तत्वबोधनपरायणा चेत्यर्थः।

सरस्वत्याः पुरतः वेगेन प्रवहन्ती गोदावरी चिराय प्रलयनश्वरं रसधिं प्राप्नोति । परंतु सरस्वत्याः पुरतः शिशुमुखादपि झरन्ती वग्धुनी सद्य एव नित्यचिद्रसधिं गच्छति अहो ! वासरवासिन्याः ज्ञानसरस्वात्याः महिमा !

इत्येतत्सर्वं मातापित्रर्पणमस्तु

नन्दाम शरदश्शतम्

ॐ तत्सत्

मूलम्पल्लीयवंशवृक्षः
कङ्कभट्टः
रामलिङ्गः (राजमल्लय्य)
राजशेखरय्य
राजलिङ्गय्य
रामनाथः(राजशेखरय्य)
राजय्य
श्रीकण्ठः
पापय्य
सांबय्य
राजमल्लय्य
महालिङ्गय्य
दक्षय्य
चूडामणिः
सुन्दरय्य
शिवलिङ्गय्य
शरभय्य
राजय्य
राजय्य
महालिङ्गय्य
सांबय्य
राजमल्लय्य
राजवीरय्य
सुन्दरय्य
शिवलिङ्गय्य विश्वनाथः राजलिङ्गय्य
शेखरय्य
मल्लिकार्जुनः राजमल्लय्य
सुन्दरय्य
राजशेखरशास्त्री
श्यामसुन्दरः
विजय्
शिवः
प्रसाद
शिवप्रसादः शिवलिङ्गय्य
शिवकुमारः
शिवलिङ्गय्यशास्त्री (प.विशालाक्षी)
सिद्धः
शिवः
सांबय्य
विश्वनाथः राजमल्लय्य
नागमल्लशर्मा चन्द्रशेखरशर्मा (स्तुति कविः)
राजेश्वरः
रविः
महेश्वरः
वैजनाथः धूर्जटिशर्मा
मञ्जुनाथः
राजेश्वरशर्मा
शंकरशर्मा
विशालाक्षी(प. रविः) कमला (प. शरद्राय्)
जानकी मल्लिका
श्रीकान्तसेनानी
सिद्धगणपतिः
शशिधरः
राजेश्वरः तरुणेन्दुशेखरः निश्चनाथः
तेजस्वी
शरद्चन्द्रश्रीवत्सः आदित्यश्रीवत्सः

# मूलम्पल्लि चन्द्रशेखरशर्मणः कुटुम्बम्

ब्रह्मश्री मूलम्पल्लि चन्द्रशेखरशर्मा, धर्मपत्नी श्रीमती प्रमिला

पुत्राः

१. चि. शशिधरः २. चि. राजेश्वरः

३. चि. तरुणेन्दुशेखरः ४. चि. विश्वनाथः